**सप्तागारं चरेद् भैक्ष्यं एकान्नं च परित्यचेत् ।**

**हंसः कमण्डलुं शिक्यं भिक्षापात्रं तथैव च ।**

**कन्था कौपीनमाच्छाद्यमङ्गस्त्रं बहिःपटम् ।**

**एकं तु वैणवं दण्डं धारयेन्नित्यमादरात् ।**

**कौपीनाच्छादनं वस्त्रं कन्थासीतं निवारणम् ।**

**अक्षमालां च गृह्णीयात् वैणवं दण्डमव्रणम् ।**

**माधूकरं तथैवान्नं परमो हंस आचरेत् ।**

तत्र बहूदककुटीचकयोः सन्ध्यावन्दनादीनि धर्माणि। तथा च बोधायनः

**उषः काले समुत्थाय कृत्वा शौचं यथाविधि ।**

**दन्तान् विशोध्य चाचम्य पर्ववर्ज्यं यथाविधि ।**

**स्नात्वा चाचम्य विधिवत् तिष्ठन्नासीन एव च ।**

**बिभ्र ज वित्रं चाक्षं प्य क्षसूत्रं करद्वये ।**

**तद्वच्च विधिवत् सन्ध्यां उपास्याह्निकमाचरेत् ।**

पूर्ववत्तर्पयित्वा यजेत् सम्यक् समाहितः ।। इति ।

तत्र कुटिचकबहूदाभिप्रायेण विष्णोरेव च तर्पणमित्युक्तम् । कुटीचकादेस्तु ब्रह्मयज्ञशेषभूततर्पणस्य सत्वात् । स्वपित्रादितद्विधानवत् स्वान्तर्यामिणा-मनिरुद्धादीनां गृहस्थादिक्रमेण तर्पणं नास्तीत्यभिप्रायेण विष्णोरेवेत्युक्तम् ।।

### *४. श्रीमौद्गलवेदाव्यासाचार्यकृततन्त्रदीपिका*

यत्याश्रमिणां किमयं न कर्तव्य इत्यत आह- **एवमेवेति** ।। एवं वटोरिव यतेरपि द्रष्टव्यम् । तत्रापि विशेषमाह- **स्वीयवित्तेनेति** ।। द्रव्यसङ्ग्रहं विना शिष्यादिभिरानीतं पूजार्थं यावत्तावदेवेत्यर्थः । वटोस्तु स्वकीयद्रव्येणापि भगवत्पूजनं

युज्यत एवेति भावः । एवं सायं प्रातः भिक्षीतेत्याद्यपि द्रष्टव्यम् । यतीनामेकवारमेव भोजनम् । विशेषप्रमाणानि तु विस्तरभयान्न लिख्यन्ते । यतेरितोऽपि विशेषमाह- **मूलमन्त्रैरिति ।।** सदेति त्रिकालोक्तिः । तथा च सर्वत्र मूलमन्त्रमन्तरा इतर-देवतामन्त्रानपेक्षया इत्यर्थः ।। ३० ।।

*५. श्रीविश्वनाथसूरिसूनुनारायणपण्डिताचार्यकृतसदाचारस्मृतिदीपिका*

यत्याश्रमेऽप्युक्तमतिदिशति । तत्र यतिः परमहंसः त्रिदण्डधार्यादि हंसश्चेति । तत्र द्वितीयस्य त्रिदण्डिबहूदककुटीचकरूपत्रिविधस्य यतेः ब्रह्मचारिधर्माणा-माचरणं वैश्वदेवादित्रितयव्यतिरेकेण इत्याह-**एवमेवेति ।।** यतेरप्येवमेव ब्रह्म-चारिवदेवेत्यर्थः । अत्रापवादान्तरम् । स्वीयवित्तेन तु विना सदा । वर्तनं भवे-दिति शेषः ।।

ब्रह्मचारिणः यद्यपि हव्यकव्याद्यर्थधनार्जने वा बाधकं नास्ति । अयाचितस्वीकारोऽप्यनुत्तमः । तथापि यतेः सर्वथा वित्तस्वीकारो निषिद्धइत्यर्थः । तथा मूलमन्त्रैः सदा स्नानम् । सदा सवनत्रयेऽपि कर्तव्यमित्यर्थः । ब्रह्मचारिणस्तु प्रातर्माध्याह्नयोरेवेत्युक्तम् । तथा तर्पणमपि वटोः पितृपितामहादीनामस्ति । यतेस्तु केवलं विष्णूद्देशेनैव जलाञ्जलिदानरूपं तर्पणं भवेदित्यर्थः ।।

## *सदाचारस्मृतिः*

*(हंस-परमहंसयोर्विशेषधर्मनिरूपणम्)*

**विशेषो निष्क्रिययतेरजलाञ्जलिता तथा ।।**

**तर्पणं तु हरेरेव यतेरन्यस्य चोदितम् ।। ३१ ।।**

### १. *श्रीस्मृतिमुक्तावलीकर्तृश्रीकृष्णाचार्यविरचिता टिप्पणी-*

तत्रापि परमहंसयतेः विशेषमाह -**विशेषो निष्क्रिययतेरिति** ।। कुटीचको बहूदश्च हंसः परमहंसकः । चतुर्धा यतयः प्रोक्ताः' इत्युक्त यतिषु मध्ये निष्क्रिययतेः परमहंसयतेश्च हरेरेव तर्पणमजलाञ्जलिना विशेषतः कार्य इति ।।एवं परमहंसयतेः धर्ममुक्त्वा कुटीचकादित्रयाणां विशेषेण कर्तव्यमाह -**यतेरन्यस्य चोदित इति** ।। निष्क्रियादन्यस्य यतेः ।

**कुटीचकस्तु सन्न्यस्य स्वे स्वे कर्मणि नित्यशः ।**
**भिक्षामादाय भुञ्जीत स्वबन्धूनां गृहेथवा ।।**
**शिखी यज्ञोपवीती स्यात् त्रिदण्डी सकमण्डलुः ।**
**सपवित्रश्च काषायी गायत्रीं च जपेत्सदा ।।**
**बहूदकस्तु सन्न्यस्य बन्धुपुत्रादिवर्जितम् ।**
**सप्तागारान् चरेद् भैक्ष्यमेकान्नं परिवर्जयेत् ।।**
**हंसः कमण्डलुं शिक्यं भिक्षापात्रं तथैव च ।**
**कन्थां कौपीनयुगलमङ्गवस्त्रं करौ पटम् ।।**
**एकं तु वैणवं दण्डं धारयेन्नित्यमादरात्'**

इत्याद्युक्तलक्षणाद्याक्रान्तस्य अन्यस्य परमहंसादन्यस्य कुटीचकादियतेः हरेरेव तर्पणं कार्यमिति चोदितः कर्तव्यत्वेनोक्तः । तथा अन्यस्य यतेः कुटीचक-बहूदकयोः समिद्धोमश्च समिदाहरणादिना अग्नौ होमश्च उदित इति ।।

### २. *श्रीश्रीनिवासतीर्थविरचितआह्निककौस्तुभः*

यतिशब्देन सामान्यतः प्राप्तयोः हंसपरमहंसयोः सङ्कोचमाह- **विशेष इति** । यतिचतुष्टयमध्ये निष्क्रान्ताः क्रियाः होमादयो यस्यात्तस्य । हंसस्य परमहंसस्य

च विशेषोऽस्ति तमेवाह- **अजलाञ्जलितेति** ।। जलाञ्जलिः ब्रह्मयज्ञादि । तदुपलक्षितपञ्चयज्ञाभावो अजलाञ्जलिता । तथा नित्यं भवेत् इत्यर्थः ।

ननु निष्क्रिययतेरित्युक्तमयुक्तम् । यतीनामपि जपक्रियादिसद्भावात् इत्यतो नात्र क्रियानिवृत्तिरभिमतेत्याह- **तर्पणं त्विति** । अन्यस्य बहूदकुटीचकाभ्यामन्यस्य यतेर्हंसस्य परमहंससस्य च हरेरेव प्रणवादिदेवतारूपस्य विष्णोस्तर्पणम् अर्घ्यादि । उपलक्षणमेतत् । स्नानगायत्रीजपार्चनादि च चोदितमेव विहितमेवेत्यर्थः । तर्पणं तु हरेरेव स्वाश्रमोक्तरीत्या कार्यं न देवदित्रयस्येति वा ।

अयमत्र समुदायार्थः - कुटिचकबहूदहंसपरमहंसभेदेन चत्वारो यतयः । तत्र शिखायज्ञोपवीती त्रिदण्डः सकमण्डलुः यावज्जीवं पुत्रदत्तान्नादः कुटीचकः । त्रिदण्डः पुत्रादिवर्जितः भिक्षान्नभोक्ता बहूदः । अनयोः सन्ध्यादीनि कर्माणि सन्त्येव । एकवैणवः कौपीनादिपटैर्युतः भिक्षापात्रादिमान् हंसः । एकदण्डः कौपीनाच्छादनो मधुकरवृत्तिः परमहंसः इत्यादि गीतातात्पर्यटीकायां स्पष्टम् । हंसपरमहंसयोरपि गायत्री वर्तत एव । तत्त्यागं वदतां सन्ध्यागायत्री नास्तीति आशाय इत्यन्यत्र तन्त्रसारसङ्ग्रहविवरणे स्फुटमिति ।

अत्र यत्याश्रमे अधिकारः सर्वेषामप्यस्ति । 'ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेत् गृहात्' इति भागवतोक्तेः । यत्तु 'अग्निमात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत्' इति वचनं, तत्तु द्विर्जायत इति योगेन त्रिवर्णपरम् । तद्धर्मास्त्वेकादशस्कन्धे स्पष्टाः ।।।।३१ ।।

## *३. श्रीनृसिंहाचार्यविरचितभावप्रकाशिका*

हंसपरमहंसयोः सङ्कोचमाह- **विशेष इति** ।। निष्क्रान्ता क्रिया यस्य हंसादेर्यतेः तथा कुटीचकादिवदेव वैराग्यादि । ततोऽधिकं चाजलाञ्जलितेति । तदुपलक्षितब्रह्मयज्ञादिकर्माभावः ।

यदुक्तं निष्क्रिययतेरिति, तत्र सर्वक्रियानिवृत्तिर्नाभिमतेत्याह- तर्पणं त्विति। नास्माभिः सर्वक्रियानिवृत्तिः हंसादेरुक्ता । किन्तु तर्पणशब्दोपलक्षितमर्घ्यादिक-मस्त्येव । गायत्रीत्यागाभावात् ।

ये तु यतीनां गायत्रीत्यागमाहुः तेषामेतद्वचनविरोधः । तथाहि- हारीतः-

**चत्वारोऽप्याश्रमा ह्येते सन्ध्यावन्दनवर्जिताः ।**

**ब्राह्मण्यादेव हीयन्ते यद्यप्युग्रतपोधराः ।। इति**

बोधायनोऽपि -

**अनागतां तु ये पूर्वामनतीतां तु पश्चिमाम् ।**

**सन्ध्यां नोपासते विप्रा कथं ते ब्राह्मणाः स्मृताः ।।**

इति स्मृत्यन्तरेऽपि -

**सायं प्रातः सदा सन्ध्यां ये विप्रा न उपासते ।**

**कामं तान् धार्मिको राजा शूद्रकर्मसु योजयेत् ।**

इति तस्मात् गायत्र्यादिना अर्घ्यादित्यागो न यतीनाम् ।

ननु उक्तवाक्येभ्यो मार्जनादीन्यपि यतीनां प्राप्नुवन्ति इति चेत्, मैवम् । सन्ध्याशब्दस्य अर्घ्ये मुख्यत्वात् । अर्घ्यस्य प्राधान्यात् । अत एव सूतकादावर्घ्यानुष्ठानमस्तीत्युक्तं प्राक् ।

कण्वः - **एकरात्रं वसेद् ग्रामे नगरे पञ्चरात्रकम् ।**

**वर्षाभ्योऽन्यत्र वर्षासु मांसास्तु चतुरो वसेत् ।।**

संवर्तः -**अष्टौ भिक्षास्समादाय स मुनिः पञ्च सप्त च ।**

**अद्भिः प्रक्षाल्य ताः सर्वास्ततोऽश्नीयाच्च वाग्यतः ।।**

मनुः -

**यथोक्तान्यानि कर्माणि परिहाय द्विजोत्तमः ।**

**आत्मज्ञाने शमे च स्यात् वेदाभ्यासे च यत्नवान् ।।**

अत्र वेदः प्रणव इति केचित् । वेदविस्मरणस्य ब्रह्महत्यासमत्वेन याज्ञवल्क्यादिभिरभिधानात् । अत एव स्मृत्यन्तरम् -

**एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ।**

**उपवासात् परं भैक्ष्यं दया दानाद् विशिष्टते ।।**

एकाक्षरः प्रणवः । ब्रह्म वेदः । तथा -

**नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।**

**कालमेव प्रतीक्षेत कृषिको वर्षणं यथा ।**

**अभिवादांस्तितिक्षेत नावमन्येत कञ्चन ।**

**न च सन्देहमाश्रित्य वैरं कुर्वीत कुत्रचित् ।**

**सन्निरुद्ध्येन्द्रियग्रामं रागद्वेषौ प्रहाय च ।**

**भयं हित्वा च भूतानां अमृतीभवति द्विजः ।। इति ।**

**'स्मृत्वा विष्णुम्'** इत्युपक्रमात् **'स्मृत्वा विष्णुं हुताशने'** इत्युपसंहारात् **'गायत्र्यास्त्रिगुणं विष्णुं ध्यायन् अष्टाक्षरं जपेत्' 'एवं सर्वोत्तमं ध्यायन्' 'भुञ्जीत हृद्गतं विष्णुं स्मरन्'** इत्यभ्यासात्, विष्णुस्मरणस्य मानान्तराप्राप्तत्वेनापूर्वत्वात्, **'स्मर्तव्यः सततं विष्णुः'** इत्यादौ **'सर्वे विधिनिषेधाः स्युः'** इत्यादौ फलवत्त्वनिन्दारूपार्थवादाभ्यां चास्य सदाचारस्मृतिशास्त्रस्य विष्णुस्मरणव्यतिषङ्गविधाने तात्पर्यमवगम्यते ।। ३१ ।।

## *४. श्रीमौद्गलवेदाव्यासाचार्यकृततन्त्रदीपिका*

सर्वयतिसाधारण्येनेत्थमुक्त्वा तत्रापि विशेषमाह- **विशेष इति** । तथा च 'कुटीचको बहूदश्च हंसः परमहंसकः । चतुर्धा यतयः प्रोक्ताः' इत्युक्तेषु जलाञ्जलित्वं -गायत्र्या अर्घ्यप्रदानं नास्ति ।।

हरेरेव तर्पणं कर्तव्यमित्युक्त्वा यतिव्यतिरिक्तस्य विशेषमाह- यतेरन्यस्येति। यत्यन्याधिकृतस्येत्यर्थः । तथा च यतिव्यतिरिक्तानां वटोश्च समिद्धोम एवेति भावः ।। तथाचोक्तं यतिलक्षणम् -

**कुटिचकस्तु चान्यस्तु स्वे स्वे कर्मणि नित्यशः ।**
**भिक्षामादाय भुञ्जीत स्वबन्धूनां गृहेऽथ वा ।**
**शिखा यज्ञोपवीती स्यात् त्रिदण्डः सकमण्डलुः ।**
**सपवित्रं सकाषायो गायत्रीं च जपेत् सदा ।**
**बहूदकस्तु सम्प्रोक्तो बन्धुपुत्रादिवर्जितः ।**
**सप्तागारांश्चरेद् भैक्ष्यमेकान्नं च परित्यजेत् ।**
**हंसः कमण्डलुं शिक्यं भिक्षापात्रं तथैव च ।**
**कन्था कौपीनयुगलं अङ्गवस्त्रं करे पटम् ।**
**एकं तु वेणुदण्डं तु धारयेन्नित्यमादरात् ।।** इत्यादि द्रष्टव्यम् ।। ३१ ।।

## *५. श्रीविश्वनाथसूरिसूनुनारायणपण्डिताचार्यकृत-सदाचारस्मृतिदीपिका*

परमहंसस्य ततोऽपि विशेषमाह—विशेष इति ।। वित्तस्वीकारराहित्य-रूपधर्मसाम्येऽपि अस्य यतेः अजलाञ्जलिनापि सदा नित्यो धर्म इत्यर्थः । न विद्यते जलाञ्जलिप्रदानमपि कर्तव्यम् । दूरे पिण्डश्राद्धादीति योज्यम् । ननु

यतिधर्मेष्वेव केवलविष्णूद्देशेन तर्पणं कर्तव्यमित्युक्तम् । तेन ज्ञायते गृहस्थादिभिः स्वपित्राद्युद्देशेनैव तर्पणं कार्यम् । तथा सति मूलमन्त्रादि जपान्ततर्पणं केवलमन्त्रदेवतारूपविष्णूद्देशेन तैर्न कार्यमित्यायातीत्यत आह -तर्पणमिति ।। यतेरिति पञ्चमी । यतिभिन्नस्याश्रमिणः केवलविष्णूद्देशेन मन्त्रान्तरतर्पणमप्युदितम् । शास्त्रे विहितमित्यर्थः । तथा च तैः पित्राद्यन्तर्यामिणः केवलस्य हरेस्तर्पणं च कर्तव्यमिति भावः ।।

## ।। इति सदाचारस्मृतौ यतिधर्मनिरूपणं समाप्तम् ।।

*। यतीनां चातुर्मास्यसङ्कल्पविधिः ।।*

*श्रीगुरुभ्यो नमः ।। परमगुरुभ्यो नमः ।।*

**श्रीश्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः ।।**

**ब्रह्मान्ता गुरवः साक्षादिष्टं दैवं श्रियः पतिः ।**
**आचार्याः श्रीमदाचार्याः सन्तु मे जन्मजन्मनि ।। १ ।।**

**श्रीहंसं परमात्मानं विरिञ्चं सनकादिकान् ।**
**दुर्वाससो ज्ञाननिधीन् वीन्द्रवारुणतीर्थकान् ।। २ ।।**

**कैवस्यतीर्थान् ज्ञानेशान् परतीर्थान् नमाम्यहम् ।**
**सत्यप्रज्ञान् ज्ञानतीर्थानन्यास्तंद्वंशजानपि ।। ३ ।।**

**पुरैव कृष्णासिद्धान्नं भुक्त्वा शोधितमानसम् ।**
**अच्युतप्रेक्षतीर्थं च मध्वार्याणां गुरुं भजे ।। ४ ।।**

**लसतु श्रीमदानन्दतीर्थेन्दुर्नो हृदम्बरे ।**
**यद्वचश्चन्द्रिकास्वान्तसन्तापं विनिकृन्तति ।। ५ ।।**

आचम्य, प्राणानायम्य, अद्य पूर्वोच्चरितएवंगुणविशेषणविशिष्टायां शुभतिथौ भारतीरमणमुख्याप्राणात्मक श्रीमद्धनुमद्भीममध्वान्तर्गत, अकार, उकार, मकार, नादबिन्दुघोषाघोषशान्तातिशान्तप्रतिपाद्य, श्रीरामकृष्णवेदव्यासनृसिंहवराहविष्णु-परञ्ज्योतिब्रह्मवासुदेवाद्यष्टाक्षरात्म, प्रणवप्रतिपाद्यविश्वतैजसप्राज्ञतुरीयात्मक, पारमहंस्यधर्मप्रवर्तकश्रीहंसरूपात्मक, व्याहृतिप्रतिपाद्यअनिरुद्धप्रद्युम्नसङ्कर्षण-वासुदेवात्मकश्रीनृसिंहरामकृष्णश्रीवेदव्यासप्रेरणया श्रीवेदव्यासप्रीत्यर्थम् एकत्र चातुर्मास्यव्रतमहं करिष्ये ।।

**चातुर्मास्ये तु सम्प्राप्ते सुप्ते देवे जनार्दने ।**

सर्वभूतहितार्थाय यतिरेकत्र संवसेत् ॥ १ ॥

अण्डजैरुद्भिजैश्चैव प्राणिभिः व्याप्यते मही ।

सूक्ष्मैर्व्यक्तैस्तथा व्यक्तैर्नानारूपैः समन्ततः ॥ २ ॥

एतेषां रक्षणार्थाय आषाढ्यादीन् वसेद्यतिः ।

ऋतुमेकं तथा द्वौ वा वसेदेवं समाहितः ॥३ ॥

धर्माद् हृदयसम्पन्ने गङ्गाद्याः सरितस्तटे ।

विष्णुक्षेत्रे विशेषेण वायोः सन्निधिसंयुते ॥४ ॥

वैष्णवैश्च समाकीर्णे ग्रामे सन्निवसेद्यतिः ।

अधिमासे तु सम्प्राप्ते मासांस्त्रीन् पञ्च वा वसेत् ॥ ५ ॥

तेषु मासेषु केशादीन् ऋत्वसन्धौ न वापयेत् ।

नदीं च न तरेत्तेषु क्रोशादूर्ध्वं न तु व्रजेत् ॥ ६ ॥

प्राणिनां सम्भवात्पूर्वं मृदं चैकत्र निक्षिपेत् ।

नान्तराले मृदं ग्राह्यं दन्तकाष्टानि चापि वा ॥ ७ ॥

द्वादश्यां पौर्णमास्यां वावकुर्यात् सङ्कल्पमन्त्रतः ।

स्थानालाभे व्रजेत्तावद्यावद्भवति पञ्चमी ॥ ८ ॥

प्रायश्चित्तेन युज्येते पञ्चम्यूर्ध्वं व्रजेद्यदि ।

जपेत् त्रिकसहस्रं तु प्राणायामशतं चरेत् ॥ ९॥

दिने दिने तु कर्तव्यं प्रायश्चित्तं चरेद्यतिः ।

चोरैरनन्विते ग्रामे ब्रह्महत्यादिदूषिते ॥ १० ॥

दुर्भिक्षे राजभङ्गे वा आसुरीं वसतिं त्यजेत् ।

पुण्यक्षेत्रे पुण्यदेशे यतिरेकत्र संवसेत् ॥ ११ ॥

पौर्णमादिषु चेत् प्रातः स्नानान्हीकोत्तरं देवपूजां कृत्वा क्षुरकर्म समाप्य यथावत् स्नानं कृत्वा माध्यान्हिकजपदेवतार्चनं कृत्वा देवस्याग्रे आचम्य, प्राणानायम्य चातुर्मास्यसङ्कल्पं कुर्यात् ।।

'गुरुपूजां करिष्ये' इति सङ्कल्प्य,

मध्ये 'ओं नमो नारायणाय' इति मन्त्रेण श्रीकृष्णं, तत्परितः प्रादक्षिण्येन वासुदेवम्, प्रद्युम्नम्, सङ्कर्षणम्, अनिरुद्धम् , तत्परितः कृष्णदक्षिणतः व्यासं, तत्पुरतः सुमन्तु,जैमिनि,वैशम्पायन,पैलान्, श्रीकृष्णपार्श्वयोः ब्रह्म-रुद्रौ, पूर्वादिदिक्षु सनकादीन् तत्पुरतः श्रीमदानन्दतीर्थभगवत्पादान्, तच्छिष्यान् पद्मनाभनृहरिमाधवतीर्थाक्षोभ्यतीर्थान्,जयार्यान् , ब्रह्मण्यतीर्थान्, लक्ष्मीनारायणमुनीन् चन्द्रिकाकृत्पादगुरून्, वादिराजराघवेन्द्रगुरून् स्वगुरूंश्च संस्मृत्य, नाममन्त्रैरावाह्य संपूजयेत् ।।

ततः नूतनवस्त्रादिकं गुरूणां समर्पयेत् ।।

चातुर्मास्यव्रताङ्गमुत्तिकासङ्ग्रहार्थं भूप्रोक्षणप्रार्थने विनियोगः ।।

'आपो हिष्ठा मयो भुव....चक्षसे ' इति प्रोक्ष्य, प्रार्थयेत् ।।

उद्धृतासि वराहेण कृष्णेन शतबाहुना ।
सर्वभूताधिवासेन वासुदेवेन पावनि ।। १ ।।
आस्यतासीह पृथिवी त्वं देवाद्यैश्च स्वयम्भुवा ।
पवित्राय च यम्मात्त्वं देवदेवेन पावनी ।। २ ।।
प्रणवेन यथा पृथ्वी मया त्वमधिवासिता ।
येनोद्धृतासि देवि त्वं क्रोडरूपेण विष्णुना ।। ३ ।।
स त्वया सह मां पातु केशवो धरणीधरः ।
आधारः सर्वभूतानां देवि त्वं परमा गतिः ।। ४ ।।

पालनी पावनी दंष्ट्री सर्वभूताभयङ्करी ।

विश्वक्रान्तासि देवि त्वं विष्णुक्रान्तासि मेदिनी ।।

पाहि मां सर्वभूतेभ्यो विष्णुना सह माधवि ।। ५ ।।

'शान्ता पृथिवी शिवमन्तरिक्षं शं नो देवीरभयं नो अस्तु ।

शिवा दिशः प्रदिश उद्दिशो न आपो विश्वतः परिपान्तु सर्वशः ।।'

'स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ।।'

'क्षेत्रस्य पतिना वयं हितेनैव जयामसि ।

गामश्वं पोषयित्वा सनो मृळातीदृशे ।।'

इति मन्त्रैः भूदेवतां विज्ञाप्य

' इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे '

इति मन्त्रेण मृत्तिकां गृहीत्वा ,पिण्डद्वयं गुरुमुद्दिश्य

'त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः ।

अतो धर्माणि धारयन् ' इति अनार्दभूमौ निक्षिप्य ,

आचम्य प्राणानायम्य, भारतीरमणमख्यप्राणान्तर्गत श्रीवेदव्यासप्रेरणया श्रीवेदव्यसप्रीत्यर्थं चातुर्मास्यव्रताङ्गत्वेन सङ्गृह्य ब्राह्मणैरानीतान् अन्यैश्चानीतान् दन्तकाष्ट, गोपीचन्दन,कटिसूत्र, कौपीन, पूर्वगृहीतमृत्तिकादीनि देवस्य पुरतःस्थाप्य शुद्ध्यर्थं प्रणवेन प्रोक्ष्य देवस्य समर्पणं करिष्ये ।।

इति सङ्कल्पयेत् ।।

ततः द्वादशाङ्गुलपरिमितदन्तकाष्टग्रन्थिं प्रोक्ष्य अभिमन्त्रयेत् ।

तत्र मन्त्रः - अस्यश्री आयुर्बलम् इति मन्त्रस्य प्रजापतिऋषिः ,अनुष्टुप्छन्दः ,ब्रह्मविष्णुमहेश्वरा देवताः अभिमन्त्रणे विनियोगः ।।

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।

ब्रह्मप्रज्ञां च मेधां च त्वं नो धेहि वनस्पते ।।

ऋषि प्रजापतिस्त्वस्य छन्दोनुष्टुप् बृहस्पतिः ।

देवतात्रितयं स्मृत्वा दन्तधावनमाचरेत् ।।

ततः गोपीचन्दनमभिमन्त्रयेत् -

गोपीचन्दन पापघ्न विष्णुदेहसमुद्भव ।

चक्राङ्कित नमस्तुभ्यं धारणान्मुक्तिदो भव ।।

ततः तद्देशग्रामे च स्थितब्रह्मक्षत्रवैश्यसच्छूद्रानाहूय यतिः इमं मन्त्रमुच्चारयेत्।

ಸನ್ಯಾಸಿಗಳು ಚಾತುರ್ಮಾಸ್ಯ ಸಂಕಲ್ಪ ಮಾಡುವ ಸ್ಥಳದಲ್ಲಿರುವ ಬ್ರಾಹ್ಮಣರನ್ನು, ಸ್ಥಳಾವಕಾಶ ಕೊಟ್ಟವರನ್ನು ಕರೆದು ಅವರನ್ನುದ್ದೇಶಿಸಿ ಈ ಮಂತ್ರಗಳನ್ನು ಹೇಳಬೇಕು.

'वयमत्र करिष्यामश्चातुर्मास्यं व्रतं परम् ।

स्थास्यामश्चतुरो मासान् अत्रैवासति बाधके ।।

यूयं तदनुमोदध्वं श्रेयः परमवाप्स्यथ ।।'

ಮಂತ್ರದ ಅಭಿಪ್ರಾಯ - ನಾವು ಈ ಸ್ಥಳದಲ್ಲಿ ಉತ್ತಮವಾದ ಚಾತುರ್ಮಾಸ್ಯವ್ರತವನ್ನು ಮಾಡುತ್ತೇವೆ. ಇಲ್ಲಿ ಯಾವ ಬಾಧಕವೂ ಇಲ್ಲದೇ ಇದ್ದಲ್ಲಿ ನಾಲ್ಕು ತಿಂಗಳು ಕಾಲ ಇಲ್ಲಿ ವಾಸ ಮಾಡುತ್ತೇವೆ. ನೀವು ಅದನ್ನು ಅನುಮೋದಿಸಬೇಕು. ಅದರಿಂದ ಉತ್ತಮವಾದ ಶ್ರೇಯಸ್ಸನ್ನು ಪಡೆಯುತ್ತೀರಿ.

ಆ ಬ್ರಾಹ್ಮಣರು ಈ ಮಂತ್ರಗಳನ್ನು ಹೇಳಬೇಕು.

ते प्रत्यूचुः -

' दर्शनस्पर्शनालापैर्भवन्तः पुण्यदायकाः ।

निवसन्तु सुखेनात्र गमिश्यामः कृतार्थताम् ।।

यथाशक्ति च शुश्रूषां करिष्यामो वयं मुदा ।।'इत्यनुमतिं कुर्यात् ।।

ನಿಮ್ಮ ದರ್ಶನ, ನಮಸ್ಕಾರ, ಸಂಭಾಷಣೆ ಮುಂತಾದವು ನಮಗೆ ಪುಣ್ಯದಾಯಕವಾದದ್ದು. ನೀವು ಇಲ್ಲಿ ಸುಖವಾಗಿ ವಾಸಮಾಡಿರಿ. ಅದರಿಂದ ನಾವು ಕೃತಾರ್ಥರಾಗುತ್ತೇವೆ. ಯಥಾಶಕ್ತಿ ನಾವು ನಿಮ್ಮ ಸೇವೆಯನ್ನು ಸಂತೋಷದಿಂದ ಮಾಡುತ್ತೇವೆ ಎಂದು ಅನುಮತಿಯನ್ನು ನೀಡಬೇಕು.

देशकालौ स्मृत्वा सर्वभूतहितार्थं श्रीविष्णुप्रीत्यर्थम् एकत्र....... क्षेत्रे (ಕ್ಷೇತ್ರದ ಹೆಸರನ್ನು ಹೇಳಬೇಕು) (क्षेत्रनाम उच्चार्य ) चातुर्मास्यव्रतं करिष्ये' इति सङ्कल्पयेत् ।।

ततः शुद्धोदकेन शङ्खं पूरयित्वा हिरण्यं तुलसीदलं च निक्षिप्य इमं मन्त्रं पठेत् -

प्रायेण प्रावृषि प्राणिसङ्कुलं वर्त्म दृश्यते ।
अतस्तेषामहिंसार्थं पक्षेष्वेकत्र संश्रये ।।
ऋतुमेकं तथा द्वौ वा वसेदेवं समाहितः ।
अण्डजैरुद्भिजैश्चैव प्राणिभिर्व्याप्यते मही ।।
सूक्ष्मैर्व्यक्तैस्तथाव्यक्तैर्नानारूपैः समन्ततः।
एतेषां रक्षणार्थाय आषाढ्यायीन् वसाम्यहम् ।।
माधवश्चतुरो मासान् सर्वभूतहिताय वै ।
स्वापं यास्यति शेषाङ्के लक्ष्म्या सह जगत्पतिः ।।
सुप्तश्चैवत्थितो यावन्नभवेत् स सनातनः ।
अहं तावन्निवस्यामि सर्वभूतहिताय वै ।।
पक्षा मासा इति स्मृत्या विश्वरूप वसाम्यहम् ।
प्रसादात्तव गोविन्द तथा मध्वाभिधाज्ञया'' इति प्रार्थ्य, पक्षा वै मासा

इति न्यायेन चातुर्मास्यव्रतं करिष्ये इति सङ्कल्प्य, देवस्याग्रे इमान्मन्त्रानुच्चार्य हस्ताभ्यां शङ्खं गृहीत्वा विष्णुगायत्र्या शङ्खतोयं पात्रान्तरे दद्यात् -

'ॐ नारायणाय विद्महे वासुदेवाय धीमहि ।
तन्नो विष्णुः प्रचोदयात् '

पुनः पूर्ववत् शङ्खं प्रपूर्य -

नमः कमलनाभाय नमस्ते जलशायिने ।
नमस्तेस्तु हृषीकेष गृहाणार्घ्यं नमोस्तुते ।।

इति ज्येष्ठपुरस्सरे द्विवारं दद्यात् ।

*ततः उपस्थानम्*

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ।।
इदं व्रतं मया देव गृहीतं पुरतस्तव ।
निर्विघ्नं सिद्धिमायातु प्रसादात्तव केशव ।।
गृहीतेस्मिन् व्रते देव यद्यपूर्णे म्रियाम्यहम् ।
तथा भवतु सम्पूर्णं प्रसादात्तव माधव ।।
नमस्ते वासुदेवाय नमः सङ्कर्षणाय च ।
प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ।।
श्रीमदानन्दतीर्थार्यकल्यणगुणसिन्धवे ।
सर्वदेषविदूराय नमो मस्करिमौलये ।।
येनाहमिहदुर्मार्गादुद्धृत्याभिनिवेशितः ।
सम्यक् श्रीवैष्णवे मार्गे पूर्णप्रज्ञं नमामि तम् ।।

ब्रह्मान्ता गुरवः साक्षादिष्टं दैवं श्रियः पतिः ।

आचार्याः श्रीमदाचार्याः सन्तु मे जन्म जन्मनि ।।

ध्रुवाद्यौरिति मन्त्रेण मृदं संस्पृश्य वै जपेत् ।।

' ध्रुवा द्यौः धृवा पृथिवी धृवासः पर्वता इमे ।

धृवं विश्वमिदं जगद्धृवो राजा विशा वयम् ।।

धृवं ते राजा वरुणो धृवं देवो बृहस्पतिः ।

धृवन्त इन्द्रश्चाग्निश्च राष्ट्रं धारयिता धृवम् ।।'

ततः मृत्पिण्डद्वयं, दन्तकाष्टं च गृहीत्वा गुरुसन्निधिं गत्वा स्वगुर्वन्तर्गत-मुख्यप्राणात्मकश्रीमदानन्दतीर्थगुर्वन्तर्गतश्रीहंसवेदव्यसौ स्मरन्, स्वगुरु-मारभ्य श्रीहंसमूर्तिप्रयन्तं गुरूणां नाममन्त्रं 'श्रीगुरुभ्यो नमः' इति आरहणक्रमेण पठेत् ।।

**ततो विज्ञापनम् -**

गृह्णन्तु मृत्तिकामार्याः सर्वपापप्रणाशिनीम् ।

युष्मत्पादप्रसादेन मम रक्षां करोत्वियम् ।। इति निवेदयेत्

गृहाणमृत्तिकां भिक्षो पूर्वपापप्रणाशिनीम् ।

युष्मानस्मानियं देवी विष्णुना सह रक्षतु ।। ..ज्येष्टो दद्यात् ।।

ततो गुरून् नमेत् ।।

'नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः ।

यजाम देवान् यदी शक्नुवाम माज्यायस्सषंसमा वृक्षि देवाः ।।'

इति नत्वा ततो नभसि दण्डं प्रागग्रमुदगग्रं वा धृत्वा पठेत् -

यथा दण्डधरो राजा दण्ड्यान् नॄन् दण्डयते निशम् ।

तथआ त्वमपि दण्डाग्र दण्ड्यान्दण्डय मामव ।।

इति प्रार्थ्य स्थाने स्थापयेत् ।।

त्रायन्ता मिह देवा स्त्रायतां मरुतां गणः ।

त्रायन्तां विश्वा भूतानि यथा यमरपा असत् ।।

'भद्रं कर्णेभिः ...यदायुः ।।'

'यस्य स्मृत्या च ..तदस्तु मे '

*श्रीमदानन्दतीर्थगुर्वन्तर्गतश्रीहंसवेदव्यासौ प्रीयेताम् ।।*

ಚಾತುರ್ಮಾಸ್ಯ ವ್ರತದ ಸಂಕಲ್ಪಮಂತ್ರಗಳು

ಸುಪ್ತೇ ತ್ವಯಿ ಜಗನ್ನಾಥ ಜಗತ್ಸುಪ್ತಂ ಭವೇದಿದಮ್ ।
ವಿಬುದ್ಧೇ ಚ ವಿಬುಧ್ಯೇತ ಪ್ರಸನ್ನೋ ಮೇ ಭವಾಚ್ಯುತ ॥
ಚತುರೋ ವಾರ್ಷಿಕಾನ್ಮಾಸಾನ್ ದೇವ ದೇವ ಜಗತ್ಪತೇ ।
ನಿರ್ವಿಘ್ನಂ ಸಿದ್ಧಿಮಾಯಾತು ಪ್ರಸಾದಾತ್ತವ ಕೇಶವ ॥
ಗೃಹೀತೇಽಸ್ಮಿನ್ ವ್ರತೇ ದೇವ ಪಂಚತ್ವಂ ಯದಿ ಮೇ ಭವೇತ್ ।
ತದಾ ಭವೇತ್ ಸುಸಂಪೂರ್ಣಂ ಪ್ರಸಾದಾತ್ತೇ ಜನಾರ್ದನ ॥

**ಶಾಕವ್ರತಸಂಕಲ್ಪ** (ಆಷಾಢಶುಕ್ಲದ್ವಾದಶೀ)

ಶಾಕವ್ರತಂ ಮಯಾ ದೇವ ಗೃಹೀತಂ ಪುರತಸತಿವ ।
ನಿರ್ವಿಘ್ನಂ ಸಿದ್ಧಿಮಾಯಾತು ಪ್ರಸಾದಾತ್ತೇ ರಮಾಪತೇ ॥

**ಶಾಕವ್ರತಸಮರ್ಪಣಮಂತ್ರ**

ಉಪಾಯನಮಿದಂ ದೇವ ವ್ರತಸಂಪೂರ್ತಿಹೇತವೇ ।
ಶಾಕಂ ತು ದ್ವಿಜವರ್ಯಾಯ ಸ ಹಿರಣ್ಯಂ ದದಾಮ್ಯಹಮ್ ॥

**ದಧಿವ್ರತ ಸಂಕಲ್ಪ**

(ಶ್ರಾವಣಶುಕ್ಲದ್ವಾದಶೀ)

ದಧಿ ಭಾದ್ರಪದೇ ಮಾಸಿ ವರ್ಜಯಿಷ್ಯೇ ಸದಾ ಹರೇ ।
ಇಮಂ ಕರಿಷ್ಯೇ ನಿಯಮಂ ನಿರ್ವಿಘ್ನಂ ಕುರು ಕೇಶವ ॥

**ಕ್ಷೀರವ್ರತಸಂಕಲ್ಪ**

(ಭಾದ್ರಪದ ಶುಕ್ಲ ದ್ವಾದಶೀ)

ಕ್ಷೀರವ್ರತಮಿದಂ ದೇವ ಗೃಹೀತಂ ಪುರತಸತಿವ ।
ನಿರ್ವಿಘ್ನಂ ಸಿದ್ಧಿಮಾಯಾತು ಪ್ರಸಾದಾತ್ತೇ ರಮಾಪತೇ ॥

**ದ್ವಿದಳವ್ರತ ಸಂಕಲ್ಪ**

(ಆಶ್ವೀಜಶುಕ್ಲದ್ವಾದಶೀ)

ಕಾರ್ತಿಕೇ ದ್ವಿದಲಂ ಧಾನ್ಯಂ ವರ್ಜಯಿಷ್ಯೇ ಸದಾ ಹರೇ ।
ಇಮಂ ಕರಿಷ್ಯೇ ನಿಯಮಂ ನಿರ್ವಿಘ್ನಂ ಕುರು ಕೇಶವ ॥

**ಚಾತುರ್ಮಾಸ್ಯ ವ್ರತ ಸಮರ್ಪಣ ಮಂತ್ರ**

ಇದಂ ವ್ರತಂ ಮಯಾ ದೇವ ಕೃತಂ ಪ್ರೀತ್ಯೈ ತವ ಪ್ರಭೋ ।
ನ್ಯೂನಂ ಸಂಪೂರ್ಣತಾಂ ಯಾತು ತ್ವತ್ಪ್ರಸಾದಾಜ್ಜನಾರ್ದನ ॥

# सर्वमूलग्रन्थोदाहृतयतिधर्मसङ्ग्रहः

## सन्यासिनां कर्तव्याकर्तव्यविचारः -

भागवततात्पर्यम् -

'नाप्रयोजनाकाङ्क्षी स्यान्न वृथा शिष्यबन्धुकृत् ।
नचोदासीनशास्त्राणि न विरुद्धानि चाभ्यसेत् ।।
न व्याख्ययोपजीवेत न निशिद्धान् समाचरेत् ।
एवंभूतो यतिर्याति तदेकशरणो हरिम् ''

(७/१३/७,८)इति समयाचारे

उदकैश्च नमस्कारैः स्तुतिभिर्मनसा तथा ।
यतिभिश्चापि सम्पूज्या देवा मोक्षमियासुभिः ।।
मध्ये विष्णुमनुस्मृत्य नान्यथा तु कथञ्चन '

(११/५/४३) इति समयाचारे ।।

श्रोतव्यं च श्रुतं चाथ वक्तव्यं कार्यमेव च ।
निवर्त्यं च हरेः पूजेत्येवं कुर्यान्न चाक्रमात् ।।
एवं कृत्वा तु सन्यासी सर्वोत्सङ्गाद्धरौ स्मृतः ।
अन्यथा नैव सन्यासी निष्क्रियोऽपि शिला यथा ।।

११/१२/९

नाहं कर्ता तु सर्वस्य कर्तैको विष्णुरव्ययः ।
इति वित्वा तु सन्नयासी नान्यथेति कथञ्चन ।। ११-१२-९

गीतातात्पर्ये-

तत्रस्थशुद्धसत्वास्तु परहंसाः प्रकीर्तिताः ।
हंसो बहूदकः कुटिजो वनस्थो नैष्ठिको गृही ।।
क्रमाद् रजोधिका बाह्यं कर्मैषामधिकं यतः ।
धर्माः परमहंसानां ब्रह्मा एव शमादिकाः ।। १८/४०,४१

*यतीनां ध्यानविधिः*

ब्रह्मसूत्रभाष्ये -

'शुद्धस्फटिकसङ्काशं वासुदेवं निरञ्जनम् ।
चिन्तयीत यतिर्नान्यं ज्ञानरूपादृते हरेः' मास्त्ये ।।३/२/१७
'भिन्धि विद्धि शृणीही ति फलभेदेन सर्वशः ।
यत्यादीनां तेष्वयोगान्नाधिकार्येकता भवेत् ।।
अयोग्योपासनादीयुरनर्थं चार्थनाशनम्'।। बृहत्तन्त्रे ३/३/२६

कर्मनिर्णये -

'ओतमस्मिन् जगद्यस्मात् ओमित्युक्तो हरिः सदा ।
तमेव जगदाधारं यतयः पर्युपासते ' मानसंहितायां

गीतातात्पर्ये -

बुद्ध्याविहिंसन् पुष्पैर्वा प्रणवेन समर्चयेत् ।
वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः ।।

ऐतरेयभाष्ये -

मुक्तस्य द्विविधैस्तस्माज्जपो योगश्च सर्वथा ।

कर्तव्यो न्यासिभी रात्रीसूक्तं जप्यं त्रिशोऽञ्जसा ।।
(ऐतरेयसंहिता२-८)

*यतिस्तुतिः*

सन्न्यासस्तु तुरीयो यो निष्क्रियाख्यः सधर्मकः ।
न तस्मादुत्तमो धर्मो लोके कश्चन विद्यते ।।
तद्भक्तोपि हि यद्गच्छेत् तद्गृहस्थो न धार्मिकः ।
मद्भक्तिश्च विरक्तिस्तदधिकारो निगद्यते ।।
यदाधिकारो भवति ब्रह्मचार्यपि प्रव्रजेत्' इति(गीताभाष्ये ५-२)
सन्न्यासे तु तुरीये वै प्रीतिर्मम गरीयसी ।
येषां यत्राधिकारो न तेषां कर्मेति निश्चयः।।(ब्राह्मे-गी.भा.५-२.)
ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा ।
यदीच्छेन्मोक्षमास्थातुमुत्तमाश्रममाश्रयेत् । (गी.भा. १८-५ )
सर्ववर्णाश्रमाणां च ज्ञानान्मोक्षो विनिश्चितः ।
अन्त्यानां स्थावराणां वा तथापि यतिरुत्तमः ।।
ज्ञानद्वारो यतो न्यासो विशेषेण भविष्यति ।। (छा.भा.२-२३)
'परेच्छयापि ये काम्यं कर्म कुर्युर्नतु क्वचित् ।
न्यासिनो नाम तेन्येभ्यः फलत्यागिभ्य उत्तमाः' गी.ता १८-१२

**यत्याश्रमकृत्यम् -**

यत्याश्रमस्तु प्रायत्यर्थो भगवत्तोषार्थश्च । अप्रयतत्वमेव हि प्रायो गृहस्थादीनाम् । इतरक्रमोद्योगात् । अप्रयतानां च न ज्ञानम् । तथाहि श्रुतिः- ' नाशान्तो नासमाहितः ' इति । महांश्च यत्याश्रमे तोषो भगवतः । तथाह्याह -

यत्याश्रमं तुरीयं तु दीक्षां मम सुतोषिणीम् । (गी.भा. ३-४)इति ।।

*यतीनां गतिवर्णनम्*

यज्ञाध्ययनदानैस्तु गृही स्यात् सामलोकगः ।
यतयस्तपसा सूर्यं चत्वारोऽपि विशेषतः ।।
गच्छन्ति ...'' (छा.भा.२-२३)

*यतीनां कर्मनिषेधः*

" कर्मणा बध्यते जन्तुः विद्यया च विमुच्यते ।
तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः'सू.भा.३-३-५०
गीतातात्पर्ये-
'वाचिको मानसो यज्ञो न्यासिनां तु विशेषतः' ३/१४-१६.

०--०-

## प्रणव(ओङ्कार)विषये सर्वमूलग्रन्थेषु विशेषविचारः

ब्रह्मणो मुखात् प्रणवोत्पत्तिः-

**भागवते - ' प्रणवेनास्पदं गताः (३-१३-४४)**

भागवततात्पर्यम् -

प्रणवः पूर्ववक्त्रात् । 'प्रणवः पूर्ववक्त्रेण' इति ब्राह्मे ।।

**ब्रह्मसूत्रभाष्ये -(३-२-१३)**

*ओङ्कारज्ञानिवर्णनम्*

'अमात्रोऽन्तमात्रश्च द्वैतस्योपशमः शिवः ।

ओङ्कारो विदितो येन समुनिर्नेतरो जनः' इति मात्स्ये

*प्रणवस्वरूपविचारः*

**भागवततात्पर्ये- ११-२१-३८.**

त्रिमात्रमादितः कृत्वा यावच्चानन्तमात्रकाः ।

प्रणवास्ते विभेदेन ह्यनन्ताःपरिकीर्तिताः ।।

एकमात्रोत्तराः सर्वे वासुदेवाभिधायकाः ।

तेषां व्याख्यानरूपा हि सर्वे वेदाः प्रकीर्तिताः ।।

ओङ्कारव्यञ्जितास्तस्मात् सदोच्चार्या हरेः प्रियैः ।। '

इति प्रणवमाहात्म्ये ।।

## *यतीनां प्रणव-गायत्रीमन्त्रजपविषये विशेषविचारः*

### *तन्त्रसारसङ्ग्रहव्याख्याने छलारीये (१-४७)*

अत्र अष्टमहामन्त्रेषु प्रणवे यतीनामेवाधिकारः । 'प्रणवो यतीनामेव गृहिभिर्ज्ञायते हि सः' इति वाराहवचनादित्याहुः ।।

अन्ये तु गृहस्थादीनामप्यधिकारोऽस्ति । आचार्यैरेव तृतीयाध्याये प्रतिमाप्रतिष्ठायां होमादिकर्तुरेव 'प्रणवं च जपेद् विष्णुम्' (३-१०३) इति गृहस्थस्यापि प्रणवजपोक्तेः ।।

विष्णुतीर्थैरपि --

**नारायणाष्टाक्षरं च वैष्णवं च षडक्षरम् ।**
**द्वादशार्णो व्याहृतयः षडेते मनवोऽखिलैः ।**
**मुमुक्षुभिः सदा जप्या यतिभिस्तत एव हि** " ( स.प.२-१२०)

इति यतेरुपदेशप्रकरणे तत एव गृहस्थादिभिः प्रणवाद्यष्ट-महामन्त्राणां जप्यत्वादेव यतिभिरेते जप्या इति गृहस्थादिजप्यत्वे हेतुरुक्तः । अत एव माधवस्मृतौ-

**" सन्ध्यासु मन्त्रा इम एव जप्यास्तारो यतीनां प्रथमो हि मन्त्रः ।**
**सावित्र उक्तश्च तथा परेषां द्विजन्मनां शश्वदनिन्द्रितानाम् "**

इत्यत्र यतीनां प्रणवः प्रथमं जप्यः । गृहस्थादीनां विश्वामित्र-गायत्रीमन्त्रः प्रथमं जप्य इति प्रथमजप्यत्व एव विशेष उक्तः । नच वाराहवचनविरोधः । पुनश्चरणे बहुजपप्रकरणे च गृहस्थस्य नाधिकारः । नतु मन्त्रमात्र इत्येवं सावकाशत्वात् ।।

उक्तं च शौनकेन -

**गृहस्थाद्यास्तथा शुद्धाः पौनश्चरणकं विना ।**

**नित्यमेव जपं कुर्युस्तेषां मन्त्रविधिं श्रुणु इति ।।**

शुद्धाः सदाचारिणः भार्यान्तरसम्बन्धरहिताः ब्रह्मचर्येण जप्या इत्य-प्याहुः । तस्माद्विशिष्टानां गृहस्थादीनां प्रणवेऽधिकारोऽस्त्येवेत्याहुः ।।

'तारो यतीनां प्रथमो हि मन्त्रः सावित्र उक्तश्च तथा परेषाम्' इत्यत्र प्रथमजप्यत्व एव विशेषोक्त्या अनिन्दितानां शुद्धानाम् अपरेषां गृहस्थादीनां सावित्रः विश्वामित्रगायत्रीमन्त्रः प्रथमं जप्यः । अनन्तरं प्रणवाद्यष्टमहामन्त्राः जप्याः । यतीनां तु तारः प्रणवः प्रथमं जप्यः । पश्चाद् विश्वामित्रगायत्री अष्टाक्षरादिमन्त्राश्च जप्या इत्यर्थप्रतीतेः यतीनामपि विश्वामित्रगायत्रीजपे अधिकारो अस्तीति ज्ञायते ।।

*यतीनां गायत्रीपरित्यागे प्रत्यवायमाह मनुः -*

**सर्वं च सन्न्यसेद् विद्वान् वेदमेकं न सन्त्यजेत् ।**

**वेदसन्न्यसनाच्छूद्रस्तस्माद्वेदं न सन्त्यजेत् ।।**

**उशनाः -**

**'कुटीचको बहूदश्च हंसः परमहंसकः ।**

**वेदमात्रपरित्यागी चण्डालादधमाधमः ।।**

**ब्राह्मण्यं च कुतस्तेषां गायत्रीरहितात्मनाम् ।**

**गायत्रीरहिताः सर्वे चण्डालादधमाधमाः' ।। इति ।।**

नचेमानि ब्रह्मगायत्रीपराणि । कल्पकाभावात् । विश्वामित्रगायत्री-निषेधकाभावात् सव्याहृतिगायत्र्याः विश्वामित्रगायत्रीत्वेन यतेस्तत्- सद्भावे प्रमाणस्योक्तत्वात् ।।'' इति ।।

नन्वत्राङ्गादिकथनं जपाद्यर्थम् । तत्राधिकारी किं गृहस्थादिः उत यतिरेव । नाद्यः । यतिः प्रणवाधिकारीति 'प्रणवो यतीनामेव गृहिभिर्ज्ञायते हि सः' इति वराहपुराणवचनेन 'जपाधिकारी यतिरस्य सूचितः' इति नारायणपण्डिताचार्येणापि यत्यतिरिक्तानामधिकाराभावकथनात् । न द्वितीयः । विष्णुतीर्थानामाचार्याणां चोक्तिविरोधात् ।। तथाहि -

**" ....ब्रह्म परममेकचारे सनातनम् ।**
**तारतम्यं त्रिवारं वा चतुर्वारमथापि वा ।**
**तन्त्रसारोक्तमार्गेण गायत्रीमथवा पराम् ।**
**नारायणाष्टाक्षरं च वैष्णवं च षडक्षरम् ।**
**द्वादशार्णं व्याहृतीश्च षडेते मनवोऽखिलैः ।**
**मुमुक्षुभिः सदा ज्ञेया यतिभिस्तत एव हि "**

इत्यस्मिन् उपदेशप्रकरणे अन्यैर्ज्ञेयत्वेहेतुरुक्तः ।

आचार्यैरपि प्रतिष्ठायां होमादिकर्तुरेव 'प्रणवं चिन्तयेद्विष्णुम् ' इति गृहस्थस्य प्रणवजप उक्तः । तस्मादत्र कोऽधिकारी इति चेत् सत्यम् । गृहस्थस्य पुनश्चरणे सहस्राह्निकजपे नाधिकारः न पुनर्मन्त्रमात्रे इति ।। उक्तमेतत् शौनकेनापि 'गृहस्थाद्यास्तथा.. नित्यमेव जपं कुर्युस्तेषां मन्त्रविधिं श्रुणु' इति ।।

अथवा प्रणवस्य स्वरूपेण साम्येऽपि ध्येयदेवताभेदेन ध्यानभेदेन अङ्गदेवताभेदेन च द्विविधत्वम् ।। यथा रामषडक्षरस्य रामयोर्ध्यानभेदेन भिन्नत्वम् ।। अथवा -

..........ऋषिभेदेन ह्यनन्ताः परिकीर्तिताः ।

एकमात्रोत्तराः सर्वे वासुदेवाभिधायकाः ।।

तेषां व्याख्यानरूपा हि सर्वे वेदा प्रकीर्तिताः ।

ओङ्कारेणान्वितास्तस्मात् सदोच्चार्या हरिप्रियैः '' इति ।।

तथाच तन्त्रसारोक्ते सर्वेषामस्त्यधिकारः । प्रणवकल्पोक्ते च यतेरेवाधिकार इति ।। तेन यतिः प्रणवविशेषाधिकारी ।। '' इति ।।

०-०-०-०

*अथ स्मृतिमुक्तावल्याम् आह्निकप्रकरणे यतिधर्माः*

**तत्र मनुः —**

**'वनेषु तु विहृत्यैवं तृतीयं भागमायुषः ।**

**चतुर्थमायुषो भागांस्त्यक्त्वा सङ्गान् परिव्रजेत् ।**

**आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः ।**

**भिक्षाबलिपरिश्रान्तः प्रव्रजन् प्रेत्य वर्धते' इति ।**

हुतहोमः कृतसमिदाधानाग्निहोत्रभिक्षाबलिपरिश्रान्तः भिक्षाचरणवैश्वदेवालि-हरणाभ्यां परिश्रान्तः ब्रह्मचर्याद्गार्हस्थ्यं ततो वानप्रस्थाश्रमं गत्वेत्यर्थः ।।

गार्हस्थ्यस्वीकरणमाश्यकमित्याह स एव –

**'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।**

**अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः' इति ।।**

याज्ञवल्क्यः –

**'वनाद् गृहाद्वा कृत्वेष्टिं सर्ववेदसदक्षिणाम् ।**

**प्राजापत्यं तदन्ते तानग्नीनारोप्य चात्मनि ।।**

**अधीतवेदो जपकृत् पुत्रवानन्नदेऽग्निमान् ।**

**शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा' इति ।।**

एतानि वचनान्यविरक्तविषयाणि । विरक्तस्य तु ब्रह्मचर्यानन्तरमेव सन्यास इत्याह स एव -

**'सन्यसेदकृतोद्वाहो ब्राह्मणो ब्रह्मवर्त्मवान् ।**

**संसारमेव निस्सारं दृष्ट्वा क्षीरदिदृक्षया' इति ।।**

प्रव्रजेद् ब्रह्मचर्येण प्रव्रजेच्च गृहादपि ।
वनाद्वा प्रव्रजेद्विद्वान् मातुरेवाथ दुःखितः ।।
उत्पन्ने सङ्करे घोरे चोरव्याघ्रादिगोचरे' ।
भवभीतस्य सन्यासमङ्गिरा मुनिरब्रवीत् ।।
'आतुराणां च संन्यासे न विधिर्नैव च क्रिया ।
प्रैषमात्रं समुच्चार्य सन्यासं तत्र पूरयेत्' इति ।

यमः –

'पुनर्दानक्रियाभावे मृतभार्यः परिव्रजेत् ।
वनस्थो घृतपायी वा वरं पन्थानमाश्रयेत् ।
ये च सन्तानजा दोषा ये च स्युः कर्मसम्भवाः ।
संन्यासाग्निर्दहेत्सर्वान् तुषाग्निरिव काञ्चन'मिति ।

मनुः –

'मृत्तोयैः शुध्यते शोध्यं नदी वेगेन शुध्यति ।
रजसा शुध्यते नारी सन्यासेन द्विजोत्तम' इति ।

दक्षः –

'सन्यस्तं ब्राह्मणं दृष्ट्वा स्थलाच्चलति भास्वरः ।
एष मे मण्डलं भित्वा परं स्थानं प्रयास्यति'इति ।

व्यासः –

'द्विरूपे वासुदेवस्य चरं चाचरमेव च ।
चरं संन्यासिनां रूपमचरं प्रतिमादिकम् ।
चत्वारश्चाश्रमाश्चेति ब्राह्मणस्य प्रकीर्तिताः ।

ब्रह्मचर्यं च गार्हस्थ्यं वानप्रस्थं त्रयः स्मृताः ।

क्षत्रियस्यापि कथिता य आचारा द्विजस्य हि ।

ब्रह्मचर्यं च गार्हस्थ्यं आश्रमद्वितयं विशः ।

गार्हस्थ्यमुचितं त्वेकं शूद्रस्य परिकीर्तितमि'ति ।

अत एव पाराशरेऽपि क्षत्रवैश्ययोर्न तुर्याश्रम इत्युक्तम् –

'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् ।

बाहुजातोरुजातानामयं धर्मो न विद्यते' ।

विष्णोर्लिङ्गधारणं सन्यास इत्यर्थः । क्षत्रवैश्ययोः परिव्राजकत्वमङ्गीकृत्य तन्निषेधवचनानां काषायदण्डनिषेधपरत्वमपि तत्रैवोक्तम् –

'ऋणत्रयमपाकृत्य निर्ममो निरहङ्कृतिः ।

ब्राह्मणः क्षत्रियो वाथ वैश्यो वा प्रव्रजेद्गृहात्' ।

व्यासो विशेषमाह –

'प्राजापत्यां निरूप्येष्टिमाग्नेयीमथ वा पुनः ।

दान्तः पक्वकषायोऽसौ ब्रह्माश्रममुपाश्रयेत्' ।

अत्र प्राजापत्येष्टिराहिताग्निविषया ।

कात्यायनः –

'कृच्छ्रांस्तु चतुरः कृत्वा पावनार्थमनाश्रमी ।

आश्रमी चेत्तप्तकृच्छ्रं तेनासौ योग्यतां व्रजेत्' इति ।

सन्यासभेदानाह व्यासः –

'कुटीचकस्तु सन्यासी स्वे स्वे कर्माणि नित्यशः ।

भिक्षामादाय भुञ्जीत स्वबन्धूनां गृहेऽथ वा ।

शिखायज्ञोपवीती स्यात्त्रिदण्डी सकमण्डलुः ।
सपवित्रश्च काषायी गायत्रीं च जपेत्सदा ।
बहूदकस्तु सन्यस्य बन्धुपुत्रादिवर्जितः ।
एक एव चरेन्नित्यं भिक्षाहारः सदैव हि' ।

यतेरसाधारणधर्मानाह स एव –

'स्नानं शौचं तथा भैक्षं नित्यमेकान्तशीलता ।
यतेश्चत्वारि कर्माणि पञ्चमं नानुशुश्रुमः ।

यतीनां निषिद्धधर्माचरणे दोषमाह स एव –

'यस्तु प्रव्रजितो भूत्वा पुनः सेवेत मैथुनम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ।
कुरुते यदि संन्यासी तस्य धर्मो विहीयते ।
शुक्लवस्त्रं स्त्रीकथा च लौल्यं यानं च नित्यशः ।
रात्रावन्नं दिवा स्वापो यतीनां पतनानि षट् ।
एकत्र लोभतो भिक्षुः पात्रपूरणमिच्छति ।
दाता स्वर्गमवाप्नोति भोक्ता किल्बिषमश्नुते ।
अन्नदानपरो भिक्षुश्चतुरो हन्ति दानतः ।
दातारमन्नमात्मानं यस्मै चान्नं प्रयच्छति' ।

उक्तेषु सन्यासेषु परमहंससन्यासमेव मुख्यमित्याहुः । ऐतरेयश्रुति-चोदितत्वात् । तथा च श्रुतिः –

'अथ परिव्राडेकशाटी परहितो मुखोदरपात्रोऽरण्यनिलयो भिक्षार्थं ग्रामं प्रविशेदासायं प्रदक्षिणेन अविचिकित्सार्ववर्णिकं भैक्षाचर्यं अभिशस्त-पतितवर्जमयज्ञोपवीति शौचनिष्ठः काममेकं वैणवं दण्डमाददीत' इति

श्रुत्या परमहंससन्यास एव विहितः न त्रिदण्ड एव सन्यासः । कर्मफल-मोक्षैषिणः सकर्मके तस्मिन्ननधिकारात् । तत्त्यागस्यापि विहितत्वाच्च ।

तदुक्तम् –

‘सर्वकर्मपरित्यागः सन्त्यक्ताशेषसाधनः ।

श्रुत्युक्तोऽत्र परिव्राट् स्यादैकात्म्यज्ञानजन्मना’ ।

‘मुण्डोऽपरिग्रहश्चेति प्रत्यक्षश्रुतिवाग्यतः ।

तद्विरुद्धं स्मृतेर्वाक्यं नापेक्ष्यं दुर्बात्वत’ इति ।

कुटीचकादिसन्यासभेदस्तावदुच्यते, तत्र पौलस्त्यः –

कुटीचको बहूदश्च हंसः परमहंसकः ।

चतुर्विधानां भिक्षूणामेकदण्डित्रिदण्डिना’मिति ।

‘प्रव्रजेद्यदि संसाराद्ब्रह्मविद्यापरायणः ।

कुटीचको भवेद्वापि यद्वा चापि बहूदकः ।

हंसो भवेत्तु ज्ञानी परमहंसस्तथोदितः ।

एकदण्डी त्रिदण्डी वा मनोदण्डी च नित्यश’ इति ।

तेषां लक्षणमाह बोधायनः –

‘कुटीचकास्तु सन्यस्य स्वीयवेश्मनि नित्यशः ।

भिक्षामादाय भुञ्जीरन् स्वबन्धूनां गृहेऽथवा ।।

शिखा यज्ञोपवीती स्यात् त्रिदण्डी सकलमण्डलुः ।

सपवित्रश्च काषायी गायत्रीं च जपेत्सदा ।।

बहूदकस्तु सन्यस्य बन्धुपुत्रादिवर्जितः ।

सप्तागारे चरेद्भैक्षमेकान्नं परिवर्जयेत् ।।

हंसः कमण्डलुं शिक्यं भिक्षापात्रं तथैव च ।
कन्थां काहपीनयुगलमङ्गवस्त्रं कटीपटम् ।।
एकं तु वैणवं दण्डं धारयेन्नित्यमादरात् ।
परमहंसस्त्वेकदण्डी सर्वसङ्गविवर्जितः ।।
शिखायज्ञोपवीतादिरहितो वेदमात्रयुक् ।
एक एव चरेन्नित्यं भिक्षाहारः सदैव हि' इति ।

सङ्ग्रहकारः –

'कुटीचके यथोक्तं स्यात्तथैव स्याद्बहूदके ।
हंसे नारायणबलिः परमहंसे न किञ्चने'ति ।

तथा तत्रैवान्यत्र –

'प्रेतादिसूतकं नास्ति त्रिदण्डिमरणे सति ।
द्वादशेऽहनि सम्प्राप्ते पार्वणं तु विधीयते ।।
त्रिदण्डिनस्तु कर्तव्यं दर्शश्राद्धादिकं च यत् ।
ज्ञानिनोऽज्ञानिनो वापि न श्राद्धं त्वेकदण्डिनः' ।

तथा दक्षः

'चतुर्णामाश्रमाणां च अनुलोमो यथा भवेत् ।
प्रतिलोमस्तथा नास्ति तस्य पातित्यहेतुतः ।
गृहस्थाश्रममास्थाय ब्रह्मचारी भवेत्पुनः ।
यतिश्चापि गृहस्थो वा सर्वाश्रमविवर्जितः' इति ।

तथा आत्रेयस्मृतौ

'यो यत्याश्रममास्थाय गृहमेधी भवेत्पुनः ।

न वटुर्न वनस्थश्च स सर्वाश्रमवर्जित' इति ।

तथा त्रिदण्डधारणं बहूदकधर्म इत्युक्तं स्कान्दे –

'बहूदकश्च सन्यस्य बन्धुपुत्रादिवर्जितः ।

गोवालरज्जुसम्बन्धं त्रिदण्डं शिक्यमुद्धतम् ।

जलपात्रं पवित्रं च खनित्रं च कृपाणिका ।

शिखा यज्ञोपवीतं च देवताराधनं चरे'दिति ।

तथा हंसस्याप्येकदण्डत्वं किमु परमहंसस्येति । हंसस्य लक्षणमपि तत्रैव –

'हंसः कमण्डलुं शिक्यं भिक्षाहारं तथैव च ।

एकं तु वैणवं दण्डं धारयेन्नित्यमादरात्'इति ।

परमहंसे शिखायज्ञोपवीतादिराहित्ये एकदण्डत्वे च स्कान्दपुराणम्

'कौपीनाच्छादनं वस्त्रं कन्थां शीतनिवारिणीम् ।

अक्षमालां च गृह्णीयाद्वैणवं दण्डमव्रणम् ।।

माधूकरमथैकान्नं परहंसः समाचरेत् ।

परमहंसास्त्रिदण्डं च रज्जुं गोवालनिर्मिताम् ।।

शिखां यज्ञोपवीतं च नित्यकर्म परित्यजेत्'इति ।।

तथा जाबालश्रुतिः –

'दण्डं कमण्डलुं शिक्यं जलपात्रं पवित्रकम् । शिखां यज्ञोपवीतं चेत्येतत्सर्वं स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेत्' इत्यादि ।।

तथा पिप्पलादशाखायाम् –

'सशिखं वपनं कृत्वा यज्ञसूत्रं त्यजेद्बुधः । यदक्षरं परं ब्रह्म तत्सूत्रमिति

धारयेत्' इति । तथा,

'अग्निहोत्रविनाशे तु जुह्वादीनि यथा त्यजेत् ।
तथा च मेखलादीनि गृहस्थाश्रमनिर्वृतः ।
तद्वद्यज्ञोपवीतस्य त्यागमिच्छन्ति योगिनः' ।

तथा विश्वामित्रोऽपि –

अथ परः परिव्राजलिङ्गः सर्वतः परिमोक्षमेके इमं कमण्डलुं च परित्यज्य ब्रह्मानुव्रजेत शिखायज्ञोपवीतकमण्डलुकपालानां त्यागी' इति ।।

तथा बोधायनोऽपि –

'अत ऊर्ध्वं यज्ञोपवीतं मन्त्रमाच्छादनकषायं शिक्यं जलपवित्रं कमण्डलुपात्रमित्येतानि वर्जयित्वाथैकदण्डमापाद्य सखा मे गोपाय' इति ।

तथा स्मृत्यन्तरेऽपि –

'यथानुविदितं तत्स्यात् परब्रह्म सनातनम् ।
तदैकदण्डं सङ्गृह्य उपवीतं शिखां त्यजेत्' ।

तथा स्मृत्यन्तरम् -

'शौचनिष्ठः काममेकं वैणवं दण्डमाददीत' इति ।

*।। इति यतिधर्मनिरूपणम् ।।*

*कालनिर्णयप्रकरणे यतिविषये संस्कारः*

तत्र विशेषमाह पुलस्त्यः–

'कुटिचको बहूदश्च हंसः परमहंसकः ।
चतुर्विधान्नं भिक्षूणामेकदण्डित्रिदण्डिनाम् ।
षोडशंनि नवान्नानि सपिण्डीकरणं न चे'ति ।

नवान्नानि नवश्राद्धानि ।

नागरखण्डे –

'यतीनां प्रेतकार्ये तु नरकं याति नान्यथा ।
उदकं नात्र दातव्यं सपिण्डं श्राद्धकर्म च ।
नारायणं समुद्दिश्य कुर्यादेकादशेऽहनि ।
दशद्वादश चाष्टौ वा भोजयेद् ब्राह्मणोत्तमान् ।

पाद्मपुराणे –

'चतुर्थमाश्रमं गच्छेद् ब्रह्मविद्यापरायणः ।
एकदण्डी त्रिदण्डी वा सर्वस्वं च विवर्जयेत् ।
एकादशेऽह्नि सम्प्राप्ते यद्वापि द्वादशेऽहनि ।
पार्वणेन विधानेन श्राद्धं कुर्यात्तदौरसः ।
प्रत्यब्दं दार्शिकं श्राद्धं तीर्थे चैव महालये ।
सम्बोधनामगोत्रेण श्राद्धकाले तु नित्यश' इति ।

एतत्परमहंसव्यतिरिक्तविषयम् । औरसश्राद्धे अधिकार इत्युक्तं ब्रह्माण्डे –

'अधिकारस्तु सर्वेषां यतीनां प्रेतकर्मणि ।

श्राद्धाधिकारो नैव स्याद्यतीनामौरसं विने'ति ।

इतरेषामप्यधिकारमाह वसिष्ठः –

'चतुर्विधानां भिक्षूणां ज्ञातिबन्धुसुतादिभिः ।

द्वादशेऽहनि कर्तव्यं तेषां श्राद्धं तु पार्वण'मिति ।

सुमन्तुरपि –

'औरसः क्षेत्रजो वापि भ्राता वा तत्सुतोऽपि वा ।

कुर्यात्तु पार्वणं श्राद्धं शिष्यान्तेवासिभूमिपा इति ।।

पुलस्त्यः–

'कुटीचकं तु प्रदहेत्पूरयेच्च बहूदकम् ।

हंसं जले विनिक्षिप्य परहंसं विकीरयेत् ।।

सपिण्डीकरणं नैव सर्वेषां स्मृतिशासनात् '

*।।इति यत्यादीनां सपिण्डीकरणनिषेधः ।।*

अथ यतिभिक्षा । भिक्षाविषये वैश्वदेवात्प्रागेव भोजनकाले वा यदा कदा भिक्षुके गृहमागते सति भिक्षां दद्यात् ।

शातातपः –

काले वा यद्यकाले वा भिक्षुके गृहमागते ।
भिक्षां द्यात्प्रयत्नेन यतये ब्रह्मचारिणे ।। इति ।

पराशरः –

वैश्वदेवे तु सम्प्राप्ते भिक्षुके गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षुकं तु विसर्जयेत् ।
वैश्वदेवकृतं दोषं शक्तो भिक्षुर्व्यपोहितम् ।
न तु भिक्षुकृतं दोषं वैश्वदेवो व्यपोहयेत् । इति ।

दत्वा विसर्जयेत् इति ।

श्राद्धविषये सङ्ग्रहे –

'गृह्याग्निशिशुदेवानां यतीनां ब्रह्मचारिणाम् ।
श्राद्धपाको न दातव्यो यावत्पिण्डान्न निर्वपेत्' ।

तत्रापवादः –

'अदत्वा भिक्षवे भिक्षां यः श्राद्धं कुरुते द्विजः ।
त्रयस्ते नरकं यान्ति दाता भोक्ता तथा पिता' । इति ।

आपस्तम्बोऽपि – भिक्षां पुरस्तादप्रयोजितां भोज्यं मते ।

प्रजापतिरपि – दुष्कृतकर्मणः ।
न तस्य पितरोऽश्नन्ति दशवर्षाणि पञ्च च ।

न च हव्यं वहत्यग्निर्यस्ताभ्यवमन्यत इति ।

वृद्धकात्यायनः –

अदुष्टं पथिकं साधुं यतिं यः परिवर्जयेत् ।
स तस्य सुकृतं दत्वा दुष्कृतं प्रतिपद्यते ।
तथैव च गृहस्थस्य निराशो भिक्षुको गतः ।
इष्टं दत्तं तपोऽधीतं सर्वमादाय गच्छति । इति ।

दानफलं पराशरस्मृतिः –

'यतिहस्ते जलं दद्याद्भैक्षं दद्यात्पृथग्जलम् ।
तदन्नं मेरुणा तुल्यं सागरोपमम् । इति ।

अदाने दोषस्तत्रैव –

'यतिश्च ब्रह्मचारी च सिद्धान्नस्वामिनावुभौ ।
तयोरन्नमदत्वा तु भुक्त्वा चान्द्रायणं चरेत्' । इति ।
आत्मार्थं पाचयेदन्नं न देवातिथिकारणात् ।
पूतिगन्धश्मशाने च स भवेद् ब्रह्मराक्षसः । इति ।

**यतिस्तुतिः -स्मृतिः –**

वटौ तु समदत्तं स्याद्गृहस्थे द्विगुणं भवेत् ।
वानप्रस्थे शतगुणं यतौ दत्तमनन्तकम् ।
ब्रह्मचारिसहस्रेण वानप्रस्थशतेन च ।
गृहस्थानां तथा कोट्या यतिरेको विशिष्यते' । इति ।

देवलः –

कुटीचको बहूदको हंसः परमहंसकः ।

एतेभ्यः क्रमशो दत्तं विज्ञेयं पूर्ववत्फलम् । इति ।

भागवते भगवानुवाच –

यत्र भिक्षुरहं तत्र तं च मां विद्धि पाण्डव! ।
पूजिते पूजितोऽहं वै पूजितास्सर्वदेवताः ॥

*॥ इति कालनिर्णयप्रकरणे यतिप्रकरणम् ॥*

*कृष्णाचार्यस्मृतिमुक्तावल्यां श्राद्धप्रकरणे*

श्राद्धे यतिनिमन्त्रणे

योगीश्वरः-

'पूयेच्छ्राद्धकाले तु यतिं च ब्रह्मचारिणम् ।
विप्रानुद्धरते पापात्पितृमातृगणानपि ।
आयुः प्रजां यशः स्वर्गं कीर्तिं पुष्टिं जयं बलम् ।
पशून् सुखं धान्यं प्राप्नोति यतिपूजनात्' इति ।

तथा शातातपः-

'काले वा यदि वाकाले यतिर्यस्यागतो गृहम् ।
पितृनुद्दिश्य दातव्यं पितृणां दत्तमक्षयम्' इति ॥

देवलोऽपि-

'वटौ तु समदत्तं स्याद्गृहस्थे द्विगुणां स्मृतम् ।
वानप्रस्थे शतगुणं यतौ दत्तमनन्तकम्' इति ॥

विष्णुरपि-

'अपि स्यात्स्वकुलेऽस्माकं पूजयेद्यस्तु योगिनः ।

यतीञ्छ्राद्धे प्रयत्नेन तेन तुष्यामहे वयम्' इति ।।

ब्रह्माण्डपुराणेऽपि-

'गृहस्थं पूजयेद्यस्तु विश्वेदेवाः सुपूजिताः ।

वानप्रस्थेन ऋषयो वालखिल्यपुरोगमाः ।।

यतीनां पूजया चापि ब्रह्मसाक्षात्सुपूजितम्' इति ।। तथा-

'काले वा यदि वाकाले श्राद्धं कुर्वन्नतन्द्रितः ।

पितृणां तृप्तिकामस्तु यतीन्प्रार्थ्य निमन्त्रयेत् ।

विना मांसेन मधुना विना दक्षिणयाशिषा ।

पूरिपूर्णं भवेच्छ्राद्धं यतिषु श्राद्धभोजिषु' ।। तथा -

'यो यतिं पूजयेद्भक्त्या पित्रर्थे श्राद्धकर्मणि ।

प्रेतयोनिविनिर्मुक्ताः पितरो यान्ति सद्गतिम्' इति ।

तथा पाद्मे-

'येषां भुङ्क्ते गृहे श्राद्धे पितृकर्मणि भिक्षुकः ।

आकल्पकालिका तृप्तिः पितृणामुपजायत' इति ।।

तथा आग्नेये कृष्णः-

'यस्य गेहे यतिर्भुङ्क्ते ग्रासमात्रमपि द्विजः ।

तुष्यन्ति पितरस्तस्य त्रयो लोकाः सहेश्वराः' ।

सङ्ग्रहे-

'संक्रान्तौ ग्रहणे चैव व्यतीपाते दिनक्षये ।

श्राद्धकालस्तु विज्ञेयो भिक्षुके गृहमागने ।

काले वा यदि वाकाले यतिर्यस्य गृहं गतः ।

पितॄनुद्दिश्य दातव्यं पितृणां तृप्तिमिच्छते'ति ।।

ननु, गृहाग्निशिशुदेवानां यतीनां ब्रह्मचारिणाम् ।

श्राद्धपाको न दातव्यो यावत्पिण्डान्न निर्वपेत्' ।।

तथा- 'यतिश्च ब्रह्मचारी च श्राद्धे तौ न निमन्त्रये'दिति ।। तथाग्नेये कृष्णबलभद्रसंवादे-

'एवमेव न सन्देहः सन्यासिनि गृहं गते ।

पूर्वमामन्त्रणं कृत्वा नहि भोजयिता यदि ।

एकभिक्षाशनं भुङ्क्ते यतिः पूर्वनिमन्त्रितः ।

श्वभ्यः प्रयच्छेदिन्द्रस्तान् दाता च नरकं व्रजे'दिति ।।

'यतिः पुनर्भुंगेकत्र व्याधः स्याद्दशजन्मसु ।

अतः स्वयं समागच्छेद्यतिरस्मद्गृहं गुरो ।

भक्त्यैव पूजयिष्यामः न चेदिष्टं समर्प्यताम्' ।

इत्यादिवचनैर्यतेर्निमन्त्रणस्य तस्यैकभिक्षायाश्च निन्द्रितत्वश्रवणात् कथं श्राद्धे यतिभोजनम्? इति चेदुच्यते,

'येषां भुङ्क्ते गृहे श्राद्धे पितृकर्मणि भिक्षुकः ।

आकल्पकालिका तृप्तिः पितृणामुपजायते' इति पाद्मे । तथा स्मृत्यन्तरे-

'अदत्वा भिक्षवे भिक्षां यच्छ्राद्धं कुरुते द्विजः ।

त्रयस्ते नरकं यान्ति दाता भोक्ता तथा पिते'ति ।। तथा-

'काले वा यदि वाकाले । पितृणां तृप्तिकामस्तु यतीन्प्रार्थ्य निमन्त्रयेत् । विना मांसेन मधुने'त्याद्युक्तवचनजातैः,तथा ब्राह्मे-

'यतीश्वरश्च करणं राजतं पात्रमेव च ।

दौहित्रः कुतपः कालः छागः कृष्णाजिनस्तथा ।

गौराः कृष्णास्तथारण्यास्तथैव त्रिविधास्तिलाः ।

पितृणां तृप्तये सृष्टा दशैते ब्रह्मणा स्वयम् '।।

इत्युक्त उक्तवचनेन श्राद्धे यतिभोजने महाफलस्य तत्र तदकरणे प्रत्यवायस्य च श्रवणेन श्राद्धे यतिभोजने महाफलस्य तत्र तदकरणे प्रत्यवायस्य च श्रवणेन श्राद्धे यतिभोजनस्य कर्तव्यत्वे सिद्धे निषेधवचनस्य केचन निमन्त्रणस्य निषेधपरत्वेन यतेर्दैवादागमने भिक्षार्थं प्रार्थयेत् । तत्र तेषां सम्मतौ -

'उपविश्यासने विप्रानर्चयित्वा विधानतः ।

पिण्डार्थमन्नमुद्धृत्य भिक्षां दद्यात्ततः स्वयम्' इति ।।

पिण्डनिर्वापणपर्यन्तं श्राद्धपाकदानस्य निषेधकवचनमवलम्ब्य गतिमाहुः ।।

अपरे, तु श्राद्धनिमन्त्रणाङ्गीकारस्य तेषामेव दोषत्वश्रवणात् । कर्तुश्च यतिभोजने बहुफलश्रवणश्च । उभयाविरोधेन श्राद्धे क्षणादिरूपनिमन्त्रण-मृत्वा तूर्ष्णीं विप्रपङ्क्तौ भोजयन्ते । श्राद्धपाकनिषेधवचनं तु दैवादागतयतिविषयमिति मन्यन्ते ।।

वृद्धास्तु,

'अपि स्यात्स्वकुलेऽस्माकं पुजयेद्यस्तु योगिनः ।

यतीञ्छ्राद्धे प्रयत्नेन तेन तुष्यामहे वयम् ।

पितृणां तृप्तिकामस्तु यतीन्प्रार्थ्य निम्त्रयेत् ।

विना मांसेन मधुना'

इत्यादिनिमन्त्रणादिवाक्यबलान्निषिद्धपरित्यागेन यतयो भोज्या एवेत्याहुः । येषां पक्षे निषेधवाक्यं तु निमन्त्रणागोचरग्रामैकरात्रिवासिमधुकरवृत्ति-

यतिपरमित्यसेयमिति ।।

'परितो योजनत्रयाच्छ्राद्धार्थं प्रार्थयेद्भिक्षुम्'

इत्यादिवाक्यबलात्तदेवावगम्यते ।। तथा-

'योगिनां पूजयेन्नित्यं दृष्टतत्वं मनीषिणम् ।

तेषां तु दत्तमक्षय्यं श्राद्धं भवति नान्यथे'ति ।। तथा-

यतिवृत्तौ स्थितान्नित्यं ज्ञानिनो ध्यानिनस्तथा ।

पूर्वमेव परीक्षेत श्राद्धार्थं तु विशेषतः'

इत्यादेश्च तदेवावगम्यत इति ।।

'यतिहस्ते जलं दद्याद्भैक्षं दद्यात्पुनर्जलम्' । इत्यादि श्राद्धप्रकरण एव सन्यासपद्धतावभिधानात् इति सर्वमनवद्यम् ।।

*।। इति श्रीकृष्णाचार्यस्मृतिमुक्तावल्यां यतिधर्मसङ्ग्रहः समाप्तः ।।*

*नैमित्तिककर्मसङ्ग्रहोक्तयत्याराधनविधिः*

*यतीनां वृन्दावनस्थापनम् ।*

अथ वृन्दावनप्रतिष्ठाविधिरुच्यते ।

अथातः सम्प्रवक्ष्यामि, प्रतिष्ठां वृन्दावनस्य च ।
पुण्याहं वाचयित्वादौ, वास्तु पूजनमाचरेत् ॥ १॥
आचार्यं वरयेत्पश्चात् ब्राह्मणान् ऋत्विजांस्तथा ।
पञ्चगव्यं मेलयित्वा तत्तन्मन्त्रेण देशिकः ॥ २॥
अश्वत्थतुलसीबिल्वमृत्तिकालेपनं तथा ।
शुद्धेन वारिणा सम्यक्, प्रक्षाल्य पौरुषेण च ॥ ३॥
तप्तताडनदोषार्थमग्निसूक्तं त्रिधा पठेत् ।
वृन्दावनस्याधोभागे कूर्ममावाहयेत्ततः ॥ ४॥
वृन्दावनस्य पार्ष्णैः मच्छकूर्मादिकानपि ।
वृन्दावनपुरोभागे प्राणनाथं प्रपूजयेत् ॥ ५॥
आवाह्य विधिवच्चैव होमं कुर्याद्विचक्षणः ॥ ६॥
पञ्चविंशतितत्वानि तथा पुरुषसूक्ततः ।
अष्टाक्षरेण शतं चरुणा गोघृतेन च ॥७॥
ततः स्विष्टकृतं हुत्वा, होमशेषं समापयेत् ।
कलशोद्वासनं कुर्याद् गृहीत्वा कलशानपि ॥ ८ ॥
धाम प्रदक्षिणीकृत्य, वाद्यघोषपुरःसरैः ।
बिम्बस्य च पुरोभागे धान्यपीठे निधाय च ॥९॥
पीठावरणपूजां च तत्वादिन्यासमाचरेत् ।

जयतीर्थाख्यगुरुं स्वामिनं रामश्चावाहयेत्ततः ।। १०।।
पञ्चामृतैरभिषिच्याथ, ततो कलशोदकेन च ।
वस्त्रेणाच्छादयेद्बिम्बं गन्धपुष्पाक्षतैरपि ।। ११।।
धूपदीपौ ततः कृत्वा महानैवेद्यमुत्तमम् ।
ताम्बूलं नारिकेलं च कर्पूरार्तिक्यमेव च ।।१२।।
प्रदक्षिणनमस्कारान् मन्त्रपुष्पाक्षतादिभिः ।
ब्राह्मणान् भोजयेत्पश्चात् फलताम्बूलदक्षिणाः ।।१३।।
गुरवे दक्षिणां दद्यात्, कोटिं लक्षं सहस्रकम् ।
तदर्धं ऋत्विजांश्चैव, तदर्ध पारणाकृताम् ।।१४।।
आश्वभ्य आश्वपाकेभ्यो दद्यादन्नं समस्तशः ।
दीनान्धकृपणादिभ्यो भूरि दानं यथोचितम् ।।१५।।
प्रतिष्ठा दक्षिणाहीना यजमानं हिनस्ति हि ।
आचार्यं मन्त्रहीनं च शिल्पिनं मानहीनतः । ।। १६।।
अन्नहीना हरेद्राष्ट्रं गोहीनायुर्हरेद् ध्रुवम् ।
पादयोः प्रणिपत्याथ दक्षिणांश्च निवेदयेत् ।। १७।।

## वृन्दावनपरिशिष्टविषयः

तदुदकैः बळित्थेत्यादिमन्त्रैः पुरुषसूक्तविष्णुसूक्तवामनसूक्तविदः, मघवन्विदा,मन्युसूक्त,पवमानसूक्ताश्च महाशान्ति महासौरसुरास्त्वाम् अभिषिंचत्वित्यादि मन्त्रैश्च अभिषिच्य,वस्त्रादिभिरलंकृत्य ।।

गोलकत्रयचिन्तनक्रमेण स्थितिन्यास, लयन्यास, प्रकारेण आवाह्य पञ्चामृताभिषेकपूर्वकं, शुद्धाभिषेकं कृत्वा, वृन्दावनं काषायवस्त्रादिभिः अलङ्कृत्य सम्पूज्य, महानैवेद्यान्तं कृत्वा, यस्य स्मृत्येति, वाचयित्वा,

पञ्चरात्रोक्तप्रतिष्ठोक्तसङ्कल्पप्रभृति, आचार्यवरणं, वृन्दावनशिलाशुद्धिं कृत्वा तदनन्तरं कलशस्थापनमारभ्य, जलाधिवास, गव्याधिवास धान्यधिवास, अग्न्युत्तारण, नेत्रोन्मीलनं सम्पाताज्येन, इत्यादि ।

सृष्टि, स्थिति, संहार, न्यासक्रमेण, पादनाभिशिरः स्पृष्ट्वा वृन्दावस्य प्राणप्रतिष्ठां कुर्यात् । प्राणप्रतिष्ठाक्रमः प्रतिष्ठाप्रयोगे द्रष्टव्यः ।।

शिलारूपवृन्दावने, तेजोरूप प्रतिमान्तर्गत श्रीश्रीपरमहंसेत्यादि गुणगणालङ्कृतेत्यादि श्रीश्रीअमुकनामकः, गुर्वन्तर्गत श्रीरामचन्द्रमावाहयामि इति आवाहिनादि मुद्रान् प्रदर्श्य, 'यागावसानपर्यन्त'मित्यादि श्लोकैः । प्रतिष्ठाप्रयोगस्थ विराट्रूपध्यानश्लोकैः च ध्यात्वा नित्यपूजावत् पूजां कुर्यात्

*।। इति यतीनां वृन्दावनस्थापनप्रयोगःसमाप्तः ।।*

*यतिसंस्कारविधिः स्मृतिरत्नाकरोक्तः*

यतीनां प्रेतसंस्कारविधिं वक्ष्याम्यशेतः ।<br>
स्नात्वा गृहस्थः शुद्धात्मा यतिसंस्कारमाचरेत् ।। १।।<br>
पुंसूक्तेन च गायत्र्या देहं संस्नापयेद्यतेः ।<br>
शिक्ये शरीरमारोप्य गन्धमाल्यैरलङ्कृतः ।।२।।<br>
घोषितं जयशब्देन दुन्दुभीनां रवैस्तवैः ।<br>
ग्रामात्प्राचीमुदीचीं वा गत्वा गत्वाऽन्यतो दिशम् ।।३।।<br>
नदीतीरेऽश्वत्थमूले गोष्ठे देवालयेपि वा ।<br>
अधस्ताद् ब्रह्मवृक्षस्य निस्वने व्याहृतीः जपेत् ।।४।।<br>
दण्डयामप्रमाणेन कुण्डगव्यैस्तु पञ्चभिः ।

पञ्चामृतैर्वा सम्प्रोक्ष्य सप्तव्याव्याहृतिभिस्तथा ॥ ५॥

याम्याग्रान् दर्भमास्तीर्य देहंसंस्थापयेद्यतेः ।

शरीरं पुरुषसूक्तेन स्नापयेत्कृत्यवित्तमः ॥ ६॥

गन्धमाल्यादिभिः सम्यगलङ्कृत्य समं ततः ।

विष्णो हव्यं रक्षस्वेति देहं गर्ते निधापयेत् ॥७॥

दद्याद्दण्डं दण्डहस्ते इदं विष्णुरिति स्मरेत् ।

जपेत् हृदयदेशे तु मनुं हंसमिति प्रभोः ॥८॥

हंसःशुचिषदिति वा साक्षाद्धन्यो भवेदिति ।

मूर्ध्नि देशे ब्रह्म ब्रह्मजज्ञामिति मन्त्रं जपेन्मनुम् ॥९॥

पुंसूक्तं तु भ्रुवोर्मध्ये पुरुषं संस्मरञ्जपेत् ।

मन्त्रेण मूर्ध्नि भिद्येत भूमिर्भूमिमगादिति ॥१०॥

भूया स्मपुत्रैः पशुभिः ये नोद्वेष्टि स भिद्यताम् ।

इति मन्त्रेण मूर्धानं सम्भिद्यात्प्रणवेन वै ॥११॥

लवणेनाकृतिर्भिश्च त्रिभिर्व्याहृतिपूर्वकैः ।

शरीरमस्याभिमृश्य सतारां व्याहृतीं जपेत् ॥१२॥

पूजयेद्देवयज्ञेन अग्निस्थं हरिमादरात् ।

अनिलाग्निसमित्रीवै गर्तं समभिपूजयेत् ॥१३॥

न चात्रशेषसंस्कारो नाशौचं नोदकक्रियाः ।

अभ्यासयोगयुक्तानां शरीरं तु विनिक्षिपेत् ॥१४॥

स्याद्रक्षितं शृगालाद्यैः कर्तुं दोषी भवेद्यदि ।

तस्मिन् देशेऽप्यनावृष्टिर्भवत्येव न संशयः ॥१५॥

ज्ञातिपुत्रकलत्राणां परिव्राण्मरणे सति ।
नास्त्येव सूतकं तेषां स्नानमप्याचरेत् नतु ॥ १६॥
यतीनां मरणे प्राप्ते स्पृष्टास्पृष्टं न विद्यते ।
आशौचबुध्या स्नानेन नरकं प्रतिपद्यते ॥ १७॥

ततः परेहनि परस्मिन् वा, शिष्यवर्गैः यथा सम्भवं वासुदेवादिचत्वारि रूपाणि उद्दिश्य आराधनं कुर्यात् । कृतौ वाऽकृतौ वा तस्य प्रेतत्वं नास्ति । भगवत्पूजार्थं शिष्यवर्गैः करणीयम् । अकरणे शिष्याणां प्रत्यवायो अस्ति । करणे महत्पुण्यं भवति । एवं प्रतिसंवत्सरं शिष्याः यथाशक्त्या तस्मिन्नहनि समाराधनं कुर्यात् ॥

*॥ इति यतिसंस्कारविधिः समाप्तः ॥*

## स्मृतिग्रन्थेषु यतिधर्मनिरूपणम्

### मनुस्मृतौ षष्ठोऽध्यायः

प्राजपत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम् ।
आत्मन्यग्नीन्त्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ।। ३८ ।।
यो दत्त्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात् ।
तस्य तेजोमया लोका भवन्ति ब्रह्मवादिनः ।। ३९ ।।
यस्मादण्वपि भूतानां द्विजान्नोत्पद्यते भयम् ।
तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन ।। ४० ।।
आगारादभिर्निष्क्रान्तः पवित्रो पचितो मुनिः ।
समुपोढेषु कामेषु निरपेक्षः परिव्रजेत् ।। ४१ ।।
एक एव चरेन्नित्यं सिद्ध्यर्थमसहायवान् ।
सिद्धिमेकस्य सम्पश्यन्न जहाति न हीयते ।। ४२ ।।
अनग्निरनिकेतः स्याद्ग्रममन्नार्थमाश्रयेत् ।
उपेक्षकोऽङ्कुसुको (साश्वयिको) मुनिर्भावसमाहितः ।। ४३ ।।
कपालं वृक्षमूलानि कुचैलमसहायता ।
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम्
।। ४४ ।।
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निर्वेशं भृतको यथा ।। ४५ ।।
दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिवेत् ।

सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ।। ४६ ।।

अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ।

न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ।। ४७ ।।

क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ।

सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ।। ४८ ।।

अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ।

आत्मनैव सहायेन सुखार्थी विचरेदिह ।। ४९ ।।

न चोत्पातनिमित्ताभ्यां भिक्षां लिप्सेत कर्हिचित् ।। ५० ।।

न तापसैर्ब्राह्मणैर्वा वयोभिरपि वा श्वभिः ।

आकीर्णं भिक्षुकैर्वाऽन्यैरागारमुपसम्व्रजेत् ।। ५१ ।।

क्लृप्तकेशनखश्मश्रुः पात्री दण्डी कुसुम्भवान् ।

विचरेन्नियतो नित्यं सर्वभूतान्यपीडयन् ।। ५२ ।।

अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च ।

तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे ।। ५३ ।।

आबु दारुपात्रं च मृण्मयं वैदलं तथा ।

एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत् ।। ५४ ।।

एककालं चरेद्भैक्षं न प्रसज्जते विस्तरे ।

भैक्षे प्रसक्तो हि यतिर्विषयेष्वपि सज्जति ।। ५५ ।।

विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।

वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत् ।। ५६ ।।

आभे न विषादी स्यल्लाभे चैव न हर्षयेत् ।

प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः ।। ५७ ।।

अभिपूजितलाभांस्तु जुगुप्सेतैव सर्वशः ।

अभिपूजितलाभैश्च यतिर्मुक्तोऽपि बध्यते ।। ५८ ।।

अल्पान्नाभ्यवहारेण रहःस्थानासनेन च ।

ह्रियमाणानि विषयैरिन्द्रियाणि निवर्तयेत् ।। ५९ ।।

इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।

अहिंसया च भूतानाममृतत्त्वाय कल्पते ।। ६० ।।

अवेक्षेत गीतर्नृणां कर्मदोषसमुद्भवाः ।

निरये चैव पतनं यातनाश्च यमक्षये ।। ६१ ।।

विप्रयोगं प्रियैश्चैव संयोगं च तथाऽप्रियैः ।

जरया चाभिभवनं व्याधिभिश्चोपपीडनम् ।। ६२ ।।

देहादुत्क्रमणं चास्मात्पुनर्गर्भे च सम्भवम् ।

योनिकोटिसहस्रेषु सृतीश्चास्यानन्तरात्मनः ।। ६३ ।।

अधर्मप्रभवं चैव दुखयोगं शरीरिणाम् ।

धर्मार्थप्रभवं चैव सुखसंयोगमक्षयम् ।। ६४ ।।

सूक्ष्मतां चान्ववेक्षेत योगेन परमात्मनः ।

देहेषु च समुत्पत्तिमुत्तमेष्वधमेु च ।। ६५ ।।

भूषितोऽपि चरेद्धर्मं यत्र तत्राश्रमे रतः ।

समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ।। ६६ ।।

फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम् ।

न नामग्रहणादेव तस्य वारि प्रसीदति ।। ६७ ।।

संरक्षणार्थं जन्तूनां रात्रावहनि वा सदा ।
शरीरस्यत्यये चैव समीक्ष्य वसुधां चरेत् ।। ६८ ।।
अह्ना रात्र्या च याञ्जन्तून्हिनस्त्यज्ञानतो यतिः ।
तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान् षडाचरेत् ।। ६९ ।।
प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत्कृतः ।
व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमन्तप ।। ७० ।।
दह्यन्ते ध्यायमानानां धातूनां हि यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ।। ७१ ।।
प्राणायामैर्दहेद्दोषन्धारणाभिश्च किल्विषम् ।
प्रत्याहारेण संसर्गानूध्यानेनानीश्वरान्गुणान् ।। ७२ ।।
उच्चवचेषु भूतेषु दुर्ज्ञेयामकृतात्मभिः ।
ध्यानयोगेन संपश्येद्गतिमस्यान्तरात्मनः ।। ७३ ।।
सम्यग्दर्शनसम्पन्नः कर्मभिर्न निध्यते ।
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ।। ७४ ।।
अहिंसयेन्द्रियासङ्गैर्वैदिकैश्चैव कर्मभिः ।
तपसश्चरणैश्चोग्रैः साधयन्तीह तत्पदम् ।। ७५ ।।
अस्थिस्यूणं स्नायुयुतं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ।। ७६ ।।
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ।। ७७ ।।
नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा ।

तथा त्यजन्निमं देहं कृच्छ्राद्ग्रहाद्विमुच्यते ।। ७८ ।।

प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।

विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम् ।। ७९ ।।

यदा भावेन भवति सर्वभावेषु निष्पृहः ।

तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम् ।। ८० ।।

अनेन विधिना सर्वास्त्यक्त्वा सङ्गाञ्छनैःशनैः ।

सर्वद्वन्द्वविनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ।। ८१ ।।

ध्यानिकं सर्वमेवैतद्यदेतदभिशब्दितम् ।

न ह्यनध्यात्मवित्कश्चित्क्रियाफलमुपाश्नुते ।। ८२ ।।

अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च ।

आध्यात्मिकं च सततं वेदान्ताभिहितं च यत् ।। ८३ ।।

इदं शरणमज्ञानामिदमेव विजानताम् ।

इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम् ।। ८४ ।।

अनेन क्रमयोगेन परिव्रजति यो द्विजः ।

स विधूयेह पाप्मानं परं ब्रह्माधिगच्छति ।। ८५ ।।

# विष्णुस्मृतौ पञ्चनवतितमोऽध्यायः

वानप्रस्थस्तपसा शरीरं शोषयेत् । ग्रीष्मे पञ्चतपाः स्यात् ।

आकाशशायी प्रावृषि । आर्द्रवासा हेमन्ते । नक्ताशी स्यात् ।

एकान्तरद्व्यन्तरत्र्यन्तराशी वा स्यात् । पुष्पाशी । फलाशी ।

शाकाशी । पर्णाशी । मूलाशी ।

यवान्नं पक्षान्तयोर्व्वा सकृदश्नीयात् ।

चान्द्रायणैर्वा वर्त्तेत । अस्मकुट्टः । दन्तोलूखलिकोवा ।

तपोभूलमिदं सर्वं दैवमानुषजं जगत् ।

तपोमध्यं तपोऽन्तश्चतपसा च तथावृतम् ।।

यद्दुश्चरं यदुरापं यद्दूरं यच्च दुष्करम् ।

सर्वं तत्तपसा साध्यं तपोहि दुरतिक्रमम् ।

**।। इति वैष्णवे धर्मशास्त्रे पञ्चनवतितमोऽध्यायः ।**

अथ त्रिष्वाश्रमेषु पक्ककषायः प्राजपत्यामिष्टिं कृत्वा
सर्ववेदसदक्षिणां दत्वा प्रव्रज्याश्रमी स्यात् ।

आत्मन्यग्नीनारोप्य भिक्षार्थं ग्राममियात् ।

सप्तागारिकं भैक्ष्यमादद्यात् ।अलाभे न व्यथेत ।

न भिक्षुकं भिक्षेत । भुक्तवति जनेऽतीते पात्रसम्पाते भैक्ष्यमादद्यात् ।

मृण्मये दारुपात्रेऽलावपात्रे वा । तेशञ्च तस्याद्भिः शुद्धिः स्यात् ।

अभिपूजितलाभादुद्विजेत । शून्यागारनिकेतनः स्यात् ।

वृक्षमूलनिकेतनो वा । न ग्रामे द्वितीयां रात्रिमावसेत् ।

कौपीनाच्छादनमात्रमेव वासनमादद्यात् ।

दृष्टिपूतं न्यसेत् पादम् । वस्त्रपूतं जलमादद्यात् ।

सत्यपूतं वदेत् । मनःपूतं समाचरेत् ।

मरणं नाभिकामयेत जीवितञ्च । अतिवादांस्तितिक्षेत ।

न कञ्चनावमन्येत । निराशीः स्यात् । निर्नमस्कारः ।

वास्यैकं तक्षतो बाहु चन्दनेनैकमुक्षतः ।

नाकल्याणं च कल्याणं तयोरपि च चिन्तयेत् ।।

प्राणायामधारणाध्याननित्यः स्यात् ।

संसारस्यानित्यतां पश्येत् । शरीरस्याशुचिभावम् ।

जरया रूपविपर्य्ययम् ।

शारीरमानसागन्तुकव्याधिभिश्चोपतापम् । सहजैश्च ।

नित्यान्धकारे गर्भे वसति मूत्रपुरीषमध्ये च ।

तत्र च शीतोष्णदुःखानुभवनम् ।

जन्मसमये योनिसङ्कटनिर्गमान्महद्दुःखानुभवनम् ।

बाल्ये मोहं गुरुपरवश्यताम् । अध्ययनादनेकक्लेशम् ।

यौवनं च विषयप्राप्तावमार्गेण तदवाप्तौ विषयसेवनान्नरके पतनम् ।

अप्रियैर्वसतिं प्रियैश्च विप्रयोगम् ।

नरकेषु च सुमहद्दुःखम् । संसारसंसृतौ तिर्य्यग्योनिषु च ।

एवमस्मिन् सततपापिनि संसारे न किञ्चित् ।

यदपि किञ्चिद्दुःखापेक्षया सुखसञ्ज्ञं तदप्यनित्यम् ।

तत्सेवाशक्तावलाभेनवा महद्दुःखम् ।

शरीरं चेदं सप्तधातुकं पश्येत् ।

वसारुधिरमांसास्थिमेदोमज्जाशुक्रात्मकं चर्म्मावनद्धं दुर्गन्धि च मलायतनं

सुखशतैरपि वृत्तं पिकारि प्रयत्नाद् धृतमपि विनाशि कामक्रोधलोभमोह-मदमात्सर्य्यस्थानं पृथिव्यप्तेजोवाय्वाकाशात्मकं अस्थिशिराधमनिश्नायुयुतं रजस्वलं षट् त्वक्पेशि अस्थ्नां त्रिभिः शतैः षष्ठ्यधिकैर्धार्य्यमाणम् ।।

तेषां विभागः ।।

सूक्ष्मैः सह चतुःषष्टिर्दशनाः , विंशतिर्नखाः , पाणिपादशलाकाश्च, षष्टिरङ्गुलीनां पर्व्वाणि, द्वे पार्ष्ण्योः , चतुष्टयं गुल्फेषु, चत्वार्य्यरत्न्योः , चत्वारि जङ्घयोः, द्वेद्वे, जानुकपोलयोर्द्वे द्वे अक्षतालूषकश्रोणिफलकेषु, भगास्थ्येकं, पृष्ठास्थि पञ्चचत्वारिंशद्भागं, पञ्चदशास्थीनि ग्रीवा, जान्वेकं , तथा हनुः, तन्मूले च द्वे, द्वे ललाटाक्षिगण्डे, नासा घनास्थिका, अर्बुदैः स्थानकैश्च सार्द्धं द्विसप्ततिः पार्श्वकाः, उरः सप्तदश, द्वौ शङ्कौ, चत्वारि कपालानि शिरश्चेति ।।

शरीरेऽस्मिन् सप्तशिराशतानि ।

नव स्नायुशतानि ।

धमनीशते द्वे ।

पञ्चपेशीशतानि ।

क्षुद्रधमनीनामेकोनत्रिंशल्लक्षाणि नवशतानि षट्पञ्चशद्धमन्यः ।

लक्षत्रयं श्मश्रुकेशकूपानाम् ।

सप्तोत्तरं मर्म्मशतम् ।

सन्धिशते द्वे ।

चतुःपञ्चाशद्रोमकोटयः सप्तषष्टिश्च लक्षाणि ।

नाभिरोजोगुदं शुक्रं शोणितं शङ्को मूर्द्धा कण्ठो हृदयं

चेति प्राणायतनानि ।

बाहुद्वयं जङ्घाद्वयं मध्यं शीर्षमिति षडङ्गानि ।

वसा वया अवहननं नाभिः क्लोमो यकृत् प्लहाक्षुद्रान्त्रं वुक्की वस्तिः पुरीषाधानमामाशयोहृदयं स्थूलान्त्रं गुदमुदरं गुदकोष्ठम् ।

कनीनिके अक्षिकूटे शष्कुलीकर्णौ कर्णपत्रकौ गण्डौ भ्रुवौ शङ्खकौ दन्तवेष्टावोष्ठौककुन्दरे वंक्षणौ वृषणौ वुक्कौ श्लेष्मसङ्घातकौ स्तनौ उपजिह्वा स्फिचौ बाहू जङ्घे ऊरुपिण्डिके तालदरंवस्तिशीर्षौ चिवुकं गलगुण्डिके अवटश्चेत्यस्मिन् शरीरके स्थानानि ।

शब्दस्पर्शरसरूपगन्धाश्च विषया ।

नासिकालोचनत्वग्जिह्वाश्रोत्रमिति बुद्धिन्द्रियाणि ।

हस्तौ पादौ पायूपस्थं जिह्वेति कर्मेन्द्रियाणि ।

मनोबुद्धिरात्मा चाव्यक्तमितीन्द्रियातीताः ।

इदं शरीरं वसुधे! क्षेत्र मित्यभिवीयते ।

एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः ।।

क्षेत्रज्ञमेव मां विद्धि सर्वक्षत्रेषु भाविनि ।

क्षेत्रं क्षेत्रज्ञविज्ञानं ज्ञेयं नित्यं मुमुक्षुणा ।

*।।इति वैष्णवे धर्म्यशास्त्रे षण्णनवतितमोऽध्यायः ।।*

*।। महाभारतोक्तयतिधर्माः ।।*

*श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि*
*सप्तचत्वारिंशदधिकशततमोऽध्यायः ।।१४७।।*

*भीष्मेण युधिष्ठिरं प्रति ब्राह्मणादिधर्मनिरूपणपूर्वकं*
*शूद्रस्य यतिशुश्रूषाप्रकारनिरूपणम्*

'पराशर उवाच ।

क्षत्रा आरम्भयज्ञास्तु वीर्ययज्ञा विशः स्मृताः ।
शूद्रा परिचरायज्ञा जपयज्ञास्तु ब्राह्मणाः ।।१।।

शुश्रूषाजीविनः शूद्रा वैश्या विपणिजीविनः ।
अनिष्टनिग्रहः क्षत्रा विप्राः स्वाध्यायजीविनः ।।२।।

तपसा शोभते विप्रो राजन्यः पालनादिभिः ।
आतिथ्येन तथा वैश्यः शूद्रो दास्येन शोभत ।।३।।

यतात्मना तु शूद्रेण शुश्रूषा नित्यमेव च ।
कर्तव्या त्रिषु वर्णेषु प्रायेणाश्रमवासिषु ।।४।।

अशक्तेन त्रिवर्गस्य सेव्या ह्याश्रमवासिनः ।
यथाशक्यं यथाप्रज्ञं यथाधर्मं यथाश्रुतम् ।।५।।

विशेषेणैव कर्तव्या शुश्रूषा भिक्षुकाश्रमे ।।६।।

आश्रमाणां तु सर्वेषां चतुर्णां भिक्षुकाश्रमम् ।
प्रधानमिति वर्ण्यन्ते शिष्टाः शास्त्रविनिश्चये ।।७।।

यच्चोपदिश्यते शिष्टैः श्रुतिस्मृतिविधानतः ।
तथाऽऽस्थेयमशक्तेन स धर्म इति निश्चितः ।।८।।

अतोऽन्यथा तु कुर्वाणाः श्रेयो नाप्नोति मानवः ।
तस्माद्भिक्षुषु शूद्रेण कार्यमात्महितं सदा ॥९॥
इह यत्कुरुते श्रेयस्तत्प्रेत्य समुपाश्नुते ।
तच्चानसूयता कार्यं कर्तव्यं यद्धि मन्यते ॥१०॥
असूयता तु तस्येह फलं दुःखादवाप्यते ।
प्रियवादी जितक्रोधो वीततन्द्रीरमत्सरः ॥११॥
क्षमावाञ्शीलसंपन्नः सत्यधर्मपरायणः ।
आपद्भावेन कुर्याद्धि शुश्रूषां भिक्षुकाश्रमे ॥१२॥
अयं मे परमो धर्मस्त्वनेनेदं सुदुष्करम् ।
संसारसागरं घोरं तरिष्यामि न संशयः ॥१३॥
विभयो देहमुत्सृज्य यास्यामि परमां गतिम् ।
नातः परं ममाप्यन्य एष धर्मः सनातनः ॥१४॥
एवं संचिन्त्य मनसा शूद्रो बुद्धिसमाधिना ।
कुर्यादविमना नित्यं शुश्रूषाधर्ममुत्तमम् ॥१५॥
शुश्रूषानियमेनेह भाव्यं शिष्टाशिना सदा ।
शमान्वितेन दान्तेन कार्याकार्यविदा सदा । ।१६॥
सर्वकार्येषु कृत्यानि कृतान्येव तु दर्शयेत् ।
यथा प्रियो भवेद्भिक्षुस्तथा कार्यं प्रसाधयेत् ॥१७॥
यदकल्प्यं भवेद्भिक्षोर्न तत्कार्यं समाचरेत् ।
यथाऽऽश्रमस्याविरुद्धं धर्ममात्राभिसंहितम् ॥१८॥
तत्कार्यमविचारेण नित्यमेव शुभार्थिना ।
मनसा कर्मणा वाचा नित्यमेव प्रसादयेत् ॥१९॥

स्थातव्यं तिष्ठमानेषु गच्छमानाननुव्रजेतथ ।
आसीनेष्वासितव्यं च नित्यमेवानुवर्तता ।।२०।।
धर्माब्धेन स्नेहेन पादौ संपीडयेत्सदा ।
उद्वर्तनादींश्च तथा कुर्यादप्रतिचोदितः ।।२१।।
नैरकार्याणि कृत्वा तु नित्यं चैवानुचोदितः ।
यथाविधिरुपस्पृश्य संन्यस्य जलभाजनम् ।।२२।।
भिक्षूणों निलयं गत्वा प्रणम्य विधिपूर्वकम् ।
ब्रह्मपूर्वान्गुरूंस्तत्र प्रणम्य नियतेन्द्रियः ।।२३।।
तथाऽऽचार्यपुदोगाणामनुकुर्यान्नमस्क्रियाम् ।
स्वधर्मचारिणां चापि सुखं पृष्ट्वाऽभिवाद्य च ।।२४।।
यो भवेत्पूर्वसंसिद्धस्तुल्यकर्मा भवेत्सदा ।
तस्मै प्रणामः कर्तव्यो नेतरेषु कदाचन ।।२५।।
अनुक्त्वा तेषु चोत्थाय नित्यमेव यतव्रतः ।
संमार्जनमथो गत्वा कृत्वा चाप्युपलेपनम् ।।२६।।
ततः पुष्पबलिं दद्यापुष्पाण्यादाय धर्मतः ।
निष्क्रम्यावसथात्तूर्णमन्यत्कर्म समाचरेत् ।।२७।।
यथोपघातो न भवेत्स्वाध्यायेऽऽश्रमिणां तथा ।
उपघातं तु कुर्वाण एनसा संप्रयुज्यते ।
तथाऽऽत्मा प्रणिधातव्यो यथा ते प्रीतिमाप्नुयुः ।।२८।।
परिचारकोऽहं वर्णानां त्रयाणां धर्मतः स्मृतः ।
किमुताश्रमवृद्धानां यथालब्धोपजीविनाम् ।।२९।।

भिक्षूणां गतरागाणां केवलं ज्ञानदर्शिनाम् ।
विशेषेण मया कार्या शुश्रूषा नियतात्मना ॥३०॥
तेषां प्रसादात्तपसा प्राप्स्यामीष्टां शुभां गतिम् ।
एवमेतद्विनिश्चित्य यदि सेवेत भिक्षुकान् ।
विधिना स्वोपदिष्टेन प्राप्नोति परमां गतिम्' ॥३१॥

*॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥१४८॥*

## *श्रीमहाभारते शान्तिपर्वणि वैष्णवधर्मपर्वणि*

*१०८ अध्याये* - श्रीकृष्णोक्तयतिमहिमावर्णने -

'' यद् गृहस्थार्जितं पापं ज्ञानतोऽज्ञानतोऽपि वा ।
निर्दहिष्यति तत्सर्वमेकरात्रोषितो यतिः ॥७ ॥
दुर्वृत्ता वा सुवृत्ता वा ज्ञानिनोऽज्ञनिनोऽपि वा ।
गृहस्थैर्यतयः पूज्याः परत्र हितकाङ्क्षिभिः ॥८ ॥
एकदण्डी त्रिदण्डी वा शिखी वा मुण्डितोऽपि वा ।
काषायदण्डधारोऽपि यतिः पूज्यो न संशयः ॥९॥
अपूजितो गृहस्थैर्वा तथा चाप्यवमानितः ।
यतिर्वाऽप्यतिथिर्वापि नरके पातयिष्यतः ॥१०॥
तस्मात्तु यतयः पूज्या मद्भक्ता मत्परायणाः ।
मयि सन्न्यस्तकर्माणः परत्र हितकाङ्क्षिभिः ॥ ''इति ॥

अभयं सर्वभूतेभ्यो दत्त्वा यश्चरते मुनिः ।

न तस्य सर्वभूतेभ्यो भयमुत्पद्यते क्वचित् '' म.भा १२-३ १९०, ४

*श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि*

*अष्टचत्वारिंशदधिकशततमोऽध्यायः*

## ।।भीष्मेण युधिष्ठिरंप्रति यतिशुश्रूषाप्रशंसनम् ।।

'पराशर उवाच ।

न तथा संप्रदानेन नोपवासादिभिस्तथा ।

इष्टां गतिमवाप्नोति यथा शुश्रूषकर्मणा ।।१।।

यादृशेन तु तोयेन शुद्धिं प्रकुरुते नरः ।

तादृग्भवति तद्धौतमुदकस्य प्रभावतः ।।२।।

शूद्रोप्येतेन मार्गेण यादृशं सेवते जनम् ।

तादृग्भवति संसर्गादचिरेण न संशयः ।।३।।

तस्मात्प्रयत्नतः सेव्या भिक्षवो नियतात्मना ।

उदकग्रहणाद्येन स्नपनोद्वर्तनैस्तथा ।।४।।

अध्वना कर्शितानां च व्याधितानां तथैव च ।

शुश्रूषां नियतं कुर्यात्तेषामापदि यत्नतः ।।५।।

दर्भाजिनान्यवेक्षेत भैक्षभाजनमेव च ।

यथाकामं च कार्याणि सर्वाण्येवोपसाधयेत् ।

प्रायश्चित्तं यथा न स्यात्तथा सर्वं समाचरेत् ।।६।।

व्याधितानां तु भिक्षूणां चेलप्रक्षालनादिभिः ।
प्रतिकर्मक्रिया कार्या भेषजानयनैस्तथा ॥७॥
पिंषणालेपनं चूर्णं कषायमथ साधनम् ।
नान्यस्य प्रतिचारेषु सुखार्थमुपपादयेत् ॥८॥
भिक्षाटनोऽभिगच्छेत भिषजश्च विपश्चितः ।
ततो विनिष्क्रियार्थानि द्रव्याणि सुमपार्जयेत् ॥९॥
यश्च प्रीतमना दद्यादादद्याद्भेषजं नरः ।
अश्रद्धया हि दत्तानि तान्यभोक्ष्याणि भिक्षुभिः ॥१०॥
श्रद्धया यदुपादत्तं श्रद्धया चोपपादितम् ।
तस्योपभोगाद्धर्मः स्याव्द्याधिभिश्च निवर्त्यते ॥११॥
आदेहपतनादेवं शुश्रूषेद्विधिपूर्वकम् ।
न त्वेवं धर्ममुत्सृज्य कुर्यात्तेषां प्रतिक्रियाम् ॥१२॥
स्वभावतो ही द्वन्द्वानि विप्रयान्त्युपयान्ति च ।
स्वभावतः सर्वभावा भवन्ति नभवन्ति च ।
सागरस्योर्मिसद्दशम विज्ञातव्या गुणात्मकाः ॥१३॥
विद्यादेवं हि यो धीमांस्तत्ववित्तत्वदर्शनः ।
न स लिप्येत पापेन पद्मपत्रमिवाम्भसा' ॥१४॥

*॥ इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि*
*अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥१४८॥*

*श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि*
*एकोनपञ्चाशदधिकशततमोऽध्यायः*

## भीष्मेण युधिष्ठिरं प्रति यतिशुश्रूषादिनानाधर्मकथनम्

**पराशर उवाच ।**

एवं प्रयतितव्यं हि शुश्रूषार्थमतन्द्रितैः ।
सर्वाभिरुपसेवाभिस्तुष्यन्ति यतयो यथा ॥१॥

नापराध्येत भिक्षोस्तु न चैनमवधीरयेत् ।
उत्तरं च न संदद्यात्क्रुद्धं चैव प्रसादयेत् ॥२॥

श्रेय एवाभिधातव्यं कर्तव्यं च प्रहृष्टवत् ।
तूष्णींभावेन वै तत्र न क्रुद्धमभिसंवदेत् ॥३॥

नाददीति परस्वानि न गृह्णीयादयाचितम् ।
लब्धालब्धेन जीवेत तथैव परितोषयेत् ॥४॥

कोपिनं तु न याचेत ज्ञानविद्वेषकारितः ।
स्थावरेषु दयां कुर्याज्जङ्गमेषु च प्राणिषु ॥५॥

यथाऽऽत्मनि तथाऽन्येषु समां दृष्टिं निपातयेतथ ।
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
संपश्यमानो विचरन्ब्रह्मभूयाय कल्पते ॥६॥

हिंसां चा यदि वाऽहिंसां न कुर्यादात्मकारणात् ।
यत्रेतरो भवेन्नित्यं दोषं तत्र न कारयेत् ॥७॥

एवं स मुच्यते दोषात्परानाश्रित्य वर्तयत् ।
आत्माश्रयेणा दोषेण लिप्यते ह्यल्पबुद्धिमान् ॥८॥

जरायुजाण्डजाश्चैव उद्भिज्जाः स्वेदजाश्च ये ।
अवध्याः सर्व एवैते बुधैः समनुवर्णिताः ॥९॥
निश्चयार्थं विबुद्धानां प्रायश्चित्तं विधीयते ।
हिंसा यथाऽन्या विहिता तथा तोषं प्रयोजयेत् ।
तथोपदिष्टं गुरुणा शिष्यस्य चरतो विधिम् ॥१०॥
न हि लोभः प्रभवति हिंसा वाऽपि तदात्मिका ।
शास्त्रदर्शनमेतद्धि विहितं विश्वयोनिना ॥११॥
यद्येतदेवं मन्येत शूद्रो ह्यपि च बुद्धिमान् ।
कृतं कृतवतां गच्छेत्किं पुनर्यो निषेवते । ।१२॥
न शूद्रः पतते कश्चिन्न च संस्कारमर्हति ।
नास्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम् ॥१३॥
अनुग्रहार्थं मनुना सर्ववर्णेषु वर्णितम् ॥१४॥
यदापवादस्तु भवेत्स्त्रीकृतः परिचारके ।
अभ्रावकाशशयनं तस्य संवत्सरं स्मृतम् ।
तेन तस्य भवेच्छान्तिस्ततो भूयोप्युपाव्रजेत् ॥१५॥
सवर्णाया भवेदेतद्धीनायास्त्वर्धमर्हति ।
वर्षत्रयं तु वैश्यायाः क्षत्रियायास्तु षट् समाः ।
ब्राह्मण्या तु समेतस्य समा द्वादश कीर्तिताः ॥१६॥
कटाग्निना वा दग्धव्यस्तस्मिन्नेव क्षणे भवेत् ।
शिश्नावपातनाद्वाऽपि विशुद्धिं समवाप्नुयात् ॥१७॥
अनस्थिबन्धमों तु यदि प्राणैर्वियोजयेत् ।
उपेष्यैकाहमादद्यात्प्राणायामांस्तु द्वादश ॥१८॥

त्रिः स्नानमुदके कृत्वा तस्मात्पापात्प्रमुच्यते ।
अस्थिबन्धेषु द्विगुणं प्रायश्चित्तं विधीयते ।।१९।।
अनेन विधिना वाऽपि स्थावरेषु न संशयः ।
कायेन पद्भ्यां हस्ताभ्यामपराधात्तु मुच्यते ।।२०।।
अदुष्टं क्षेपयेद्यस्तु सर्ववर्णेषु यश्चरेत् ।
तस्याप्यष्टगुणं विद्यात्प्रायश्चित्तं तदेव तु ।।२१।।
चतुर्गुणं कर्मकृते द्विगुणं वाक्प्रदूषिते ।
कृत्वा तु मानसं पापं तथैवैकगुणं स्मृतम् ।।२२।।
तस्मादेतानि सर्वाणि विदित्वा न समाचरेत् ।
सर्वभूतहितार्थं हि कुशलानि समाचरेत् ।।२३।।
एवं समाहितमनाः सेवते यदि सत्तमान् ।
तद्व्रतिस्तत्समाचारस्तन्मनास्तत्परायणः ।।२४।।
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निर्वेशं भृतको यथा ।।२५।।
एवं प्रवर्तमानस्तु विनीतः प्रयतात्मवान् ।
निर्णयं पुण्यपापाभ्यामचिरेणोपगच्छति' ।।२६।।

*।। इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः ।।१४९।।*

*श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि*

*अष्टोत्तराधिकद्विशततमोऽध्यायः*

## ईश्वरेण पार्वतीं प्रति वर्णाश्रमधर्मकथनम्

यतिधर्मास्तथा देवि गृहांस्त्यक्त्वा यतस्ततः ।
आकिञ्चन्यमनारम्भः सर्वतः शौचमार्जवम् ॥५०॥
सर्वत्र भैक्षचर्या च सर्वत्रैव विवासनम् ।
सदा ध्यानपरत्वं च देहशुद्धिः क्षमा दया ।
तत्वानुगतबुद्धित्वं तस्य धर्मविधिर्भवेत् ॥५१॥
ब्रह्मचारी च यो देवि जन्मप्रभृति भिक्षितः ।
ब्रह्मचर्यपरो भूत्वा साधयेद्गुरुमात्मनः ।
सर्वकालेषु सर्वत्र गुरुपूजां समाचरेत् ॥५२॥
भैक्षचर्याग्निकार्यं च सदा जलनिषेवणम् ।
स्वाध्यायः सततं तस्य एष धर्मः सनातनः ॥५३॥
तस्य चेष्टा तु गुर्वर्थमाप्राणान्तमिति स्थितिः ।
गुरोरभावे तत्पुत्रे गुरुवद्वृत्तिमाचरेत् ॥५४॥
एवं सोप्यमलाँल्लोकान्ब्राह्मणः प्रतिपद्यते ।
एष ते कथितो देवि धर्मश्चाश्रमवासिनाम् ॥५५॥
चतुर्णामाश्रमो युक्तो लोक इत्येव विद्यते ।
कथितं ते समासेन किं भूयः श्रोतुमिच्छसि ॥५६॥

*इति श्रीमन्महाभारते अनुशासनवर्पणि दानधर्मपर्वणि*
*अष्टोत्तरद्विशततमोऽध्यायः ॥२०८॥*

*।।अथ वासिष्ठे धर्मशास्त्रे दशमोऽध्यायः ।*

## अथ यतिधर्मवर्णनम्

परिव्राजकः सर्वभूताभयदक्षिणां दत्त्वा प्रतिष्ठेत ।।१।।

अथाप्युदाहरन्ति ।।२।।

अभयं सर्वभूतेभ्यो दत्त्वा चरति यो मुनिः ।
तस्यापि सर्वभूतेभ्यो न भयं जातु विद्यते ।।३।।

अभयं सर्वभूतेभ्यो दत्त्वा यस्तु निवर्तते ।
हन्ति जातानजातांश्च द्रव्याणि प्रतिगृह्य च ।।४।।

संन्यसेत्सर्वकर्माणि वेदमेकं न संन्यसेत् ।
वेदसंन्यसनाच्छूद्रस्तस्माद्वेदं न संन्यसेत् ।।५।।

एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ।
उपवासात्परं भैक्षं दया दानाद्विशिष्यते ।।६।।

मुण्डोऽममोऽपरिग्रहः सप्तागाराण्यसंकल्पितानि
चरेद्भैक्ष्यं(क्षं) विधूमे सन्न मुसले ।।७।।

एकशाटीपरिवृतोऽजिनेन वा गोप्रूनैस्तृणैर्वेष्टितशरीरः
स्थण्डिलशाय्यनित्यां वसतिं वसेत्, ग्रामान्ते देवगृहे
शून्यागारे वृक्षमूले वा मनसा ज्ञानमधीयानः ।।८।।

अरण्यनित्यो न ग्राम्यपशूनां संदर्शने विहरेत् ।।९।।

अथाप्युदाहरन्ति ।।१०।।

अदण्यनित्यस्य जितेन्द्रियस्य, सर्वेन्द्रियप्रीतिनिवर्तकस्य ।
अत्मात्मचिन्तागतमानसस्य ध्रुवा ह्यनावृत्तिरुपेक्षकस्य इति ।।११।।

अव्यक्तलिङ्गो व्यक्ताचारः, अनुन्मत्त उन्मत्तवेषः ॥१२॥

अथाप्युदाहरन्ति ॥१३॥

न शब्दशास्त्राभिरतस्य मोक्षो न चापि लोकग्रहणे रतस्य ।

न भोजनाच्छादनतत्परस्य न चापि रम्यावसथप्रियस्य ॥१४॥

म चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ।

अनुशासनवादाभ्यां मिक्षां लिप्सेत कर्हिचित् ॥१५॥

आभे न विषादी स्याल्लाभश्चैनं न हर्षयेत् ।

प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः ॥१६॥

न कुट्यां नोदके सङ्गे न चैले न त्रिपुष्करे ।

नागारे नाऽऽसने नान्ते यस्य वै मोक्षवित्तमः । इति ॥१७॥

ब्राह्मणकुले वा यल्लभेत तद्भुञ्जीत,

सायं प्रातर्मधुमांसपरिवर्जम् ॥१८॥

यतीन्साधून्वा गृहस्थान्सायं प्रातश्च तृप्येत् ॥१९॥

ग्रामे वा वसेत् ॥२०॥

अजिह्मोऽशरणोऽसंकुसुको नचेन्द्रियसंयोगं कुर्वीतकेनचित् ॥२१॥

उपेक्षकः सर्वभूतानां हिंसानुग्रीपरिहारेण ॥२२॥

पैशुन्यमत्सराभिमानाहंकाराश्रद्धानार्वात्मस्तवपरगर्हादम्भलोभ-

मोहक्रोधासूयाविवर्जनं सर्वाश्रमिणां धर्म इष्टः ॥२३॥

यज्ञोपवीत्युदककमण्डलुहस्तः शुचिर्ब्राह्मणो

वृषलान्नपानवर्जी न हीयते ब्रह्मलोकादूब्रह्मलोकादिति ॥२४॥

*॥ इति वासिष्ठे धर्मशास्त्रे दशमोध्यायः ॥*

## अथ संन्यासविधिवर्णनम् ।

अथातः संन्यासविधिं व्याख्यास्यामः ।।१।।

सोऽत एव ब्रह्मचर्यवान्प्रव्रजतीत्येकेषाम् ।।२।।

अथ शालीनयायावराणामनपत्यानाम् ।।३।।

विधुरो वा प्रजाः स्वधर्मे प्रतिष्ठाप्य वा ।।४।।

सप्तत्या ऊर्ध्वे संन्यासमुपदिशन्ति ।।५।।

वानप्रस्थस्य या कर्मविरामे ।।६।।

एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान् । तस्यैवाऽऽत्मा पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेनेति ।।७।।

अपुनभवं नयतीति नित्यः ।।८।।

महदेनं गमयतीति महिमा ।।९।।

केशश्मश्रुलोमनखानि वापयित्वोपकल्पयते ।।१०।।

यष्टयः शिक्यं जलपवित्रं कमण्डलुं पात्रमिति ।।११।।

एतत्समादाय ग्रामान्ते ग्रामसीमान्तेऽग्न्यगारे वाऽऽज्यं पयो दधीति त्रिवृत्प्राश्योपविशेत् ।।१२।।

अपो वा ।।१३।।

ओं भूः सावित्रीं प्रविशामि तत्सवितुर्वरेण्यम् ।।१४।।

ओं भुवः सावित्रीं प्रविशामि भर्गो देवस्य धीमहि ।।१५।।

ओं स्वः सावित्रीं प्रविशामि धियो यो नः प्रजोदयादिति ।।१६।।

पच्छोऽर्धर्चशस्ततः समस्तया च व्यस्तया च ।।१७।।

आश्रमादाश्रममुपनीय ब्रह्मपूतो भवतीति विज्ञायते ।।१८।।

अथाप्युदाहरन्ति ।।१९।।

आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः ।

भिक्षाबलिपरिश्रान्तः पश्चाद्भवति भिक्षुक इति ।।२०।।

स एष भिक्षुरानन्त्याय ।।२१ ।।

पुराऽऽदित्यस्यास्तमयाद्गार्हपत्यमुपसमाधायान्वहार्यपचन-
माहृत्य ज्वलन्तमाहवनीयमुद्धृत्य गार्हपत्य आज्यं विलाप्य,
उत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा समिद्धस्याहवनीये पूर्णाहुतिं
जुहोति, ओं स्वाहेति ।।२२।।

एतद्ब्रह्मान्वाधानमिति विज्ञायते ।।२३।।

अथ सायं हुतेऽग्निहोत्र उत्तरेण गार्हपत्यं तृणानि संस्तीर्य
तेषु द्वंद्वं न्यञ्चि पात्राणि सायित्वा दक्षिणेनाऽऽहवनीयं
ब्रह्मायतने दर्भान्संस्तीर्य तेषु कृष्णाजिनं चान्तर्धायैतां
रात्रिं जागर्ति ।।२४।।

य एवं विद्वान्ब्रह्मरात्रिमुपोष्य ब्राह्मणोऽग्नीन्समारोप्य
प्रमीयते सर्वं पाप्मानं तरति तरति ब्रह्महत्याम् ।।२५।।

अथ ब्राह्मेमुहूर्त उत्थाय काल एव प्रातरग्निहोत्रं जुहोति ।।२६।।

अथ पृष्ठ्यां स्तीर्त्वाऽपः प्रणीय वैश्वानरं द्वादशकपालं
निर्वपति सा प्रसिद्धेष्टिः संतिष्ठते ।।२७।।

आहवनीयेऽग्निहोत्रपात्राणि प्रक्षिपत्यमृण्मयान्यनश्ममयानि ।।२८।।

गार्हपत्येऽरणी ।।२९।।

भवतं नः समनसाविति आत्मन्यग्नीन्समारोपयते ।।३०।।

या ते अग्ने यज्ञिया तनूरिति त्रिस्त्रिरेकैकं समाजिघ्रति ।।३१।।

अथान्तर्वेदि तिष्ठन्, ओं भूर्भुवः स्वः संन्यस्तं मया ।

संन्यस्तं मया संन्यस्तं मयेति त्रिरुपांशूक्त्वा त्रिरुच्चैः ।।३२।।

त्रिषत्या हि देवा इति विज्ञायते ।।३३।।

अभयं सर्वभूतेभ्यो मत्त इति चापां पूर्णमञ्जलिं निनयति ।।३४।।

अथप्युदाहरन्ति ।।३५।।

अभयं सर्वभूतेभ्यो दत्त्वा यश्चरदे मुनिः ।

न तस्य सर्वभूतेभ्यो भयं चापि ह जायत, इति ।।३६।।

स वाचंयमो भवति ।।३७।।

सखा मा गोपायेति दण्डमादत्ते ।।३८।।

यदस्य पारे रजस इति शिक्यं गृह्णाति ।।३९।।

येन देवाः पवित्रेणेति जलपवित्रं गृह्णाति ।।४०।।

येन देवा ज्योतिषेर्ध्वा उदायन्निति कमण्डलु गृह्णाति ।।४१।।

सप्तव्याहृतिभिः पात्रं गृह्णाति ।।४२।।

यष्टयः शिक्यं जलपवित्रं पात्रमित्येतत्समादाययत्राऽऽपस्तद्
गत्वा स्नात्वाऽप आचम्य सुरभिमत्या । अऽब्लिङ्गाभिर्वारुणीभि-
र्हिरण्यवर्णाभिः पावमानीभिरिति मार्जयित्वाऽन्तर्जागतोऽघमर्षणेन
षोडश प्राणायामान्धारयितवोत्तीर्य वासः पीडयित्वाऽन्यत्प्रयतं वासः

परिधायऽप आचम्य, ओं भूर्भुवः स्वरिति जलपवित्र-
मादाय तर्पयति ॥४३॥

ओं भूस्तर्पयाम्यों भुवस्तर्पयाम्यों स्वस्तर्पयाम्यों महस्तर्पयाम्यों
जनस्तर्पयाम्यों तपस्तर्पयाम्यों सत्यं तर्पयामिति ॥४४॥

देववत्पितृभ्योऽञ्जलिमादाय, ओं भूः स्वधों भुवः
स्वधों स्वः स्वधों भूर्भुवः स्वर्महर्नम इति ॥४५॥

अथोदुत्यं चित्रमिति द्वाभ्यामादित्यमुपतिष्ठते ॥४६॥

ओमिति ब्रह्म ब्रह्म वा एष ज्योतिर्य एषः तपत्येष वेदो य
एष तपति वेद्यमेवैतद् य एषं तपति एवमेवैष आत्मानं
तर्पयत्यात्मने नमस्करोति ॥४७॥

आत्मा ब्रह्मात्मा ज्योतिः ॥४८॥

सावित्रीं सहस्रकृत्व आवर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा ॥४९॥

ओं भूर्भुवः स्वरिति जलपवित्रमादायापो गृह्णाति ॥५०॥

न चात ऊर्ध्वमनुद्धृताभिरद्भिरपरिस्रुतमभिरपरि-
पूताभिर्वाऽऽचामेत् ॥ ५१॥

न चात ऊर्ध्वं शुक्लवासो धारयेत् ॥५२॥

एकदण्डी त्रिदण्डी वा ॥५३॥

अथेमानि व्रतानि भवन्ति ॥५४॥

अहिंसा सत्यमस्तैन्यं मैथुनस्य च वर्जनम् ।
त्याग इत्येव पञ्चैवोपव्रतानि भवन्ति(हि) ॥५५॥

अक्रोधो गुरुशुश्रूषाऽप्रमादः शौचमाहारशुद्धिश्चेति ॥५६॥

अथ भैक्षचर्यां ।।५७।।

ब्राह्मणानां शालीनयायावराणामपवृत्ते वैश्वदेवे

भिक्षां गोदोहमात्र-माकाङ्क्षेत् ।।५८।।

अथ भैक्षचर्यादुपावृत्य शुचौ देशे न्यस्य हस्तपादान् प्रक्षाल्य
आदित्यस्याग्रं निवेदयेत् ।।६०।।

उदुत्यं चित्रमिति ब्रह्मणे निवेदयते ब्रह्मजज्ञानमिति विज्ञायते ।।

आधानप्रभृति यजमान एवाग्नयो भवन्ति तस्य प्राणो गार्हपत्यो-
ऽपानोऽन्वाहार्यपचनो व्यान आहवनीय उदानसमानौ सभ्यमवसथ्यौ
पञ्च वा एतेऽग्नय आत्मस्था आत्मन्येव जुहोति स एष आत्मयज्ञ
आत्मनिष्ठ आत्मप्रतिष्ठ आत्मानं क्षेमं नयतीति विज्ञायते ।।६२।।

भूतेभ्यो दयापूर्वं संविभज्य शेषमद्भिः

संस्पृश्यौषधवत्प्राश्नीयात् ।।६३।।

प्राश्याय आचम्य ज्योतिष्मत्याऽऽदित्यमुपतिष्ठते

'उद्वयं तमस-स्परीति ।।६४।।

'वाङ्ग आसन् नसोः प्राणः' इति जपित्वा ।।६५।।

अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया ।

आहारमात्रं भुञ्जित केवलं प्राणयात्रिकमिति ।।६६।।

अथाप्युदाहरन्ति ।।६७।।

अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः ।

द्वात्रिंशतं गृहस्थस्यापरिमितं ब्रह्मचारिणः ।।६८।।

भैक्षं वा सर्ववर्णेभ्य एकान्न वा द्विजातिषु ।

अपि वा सर्ववर्णेभ्यो न चैकान्न द्विजातिष्विति ॥६९॥

अथ यत्रोपनिषदमाचार्या ब्रुवते तत्रोदाहरन्ति ॥७०॥

स्थानमौनवीरासनसवनोपस्पर्शनचतुर्थषष्ठाष्टमकाल-

व्रतयुक्तस्य कणपिण्याकयावकदधिपयोव्रतत्वं चेति ॥७१॥

तत्र मौनेयुक्तस्त्रैविद्यवृद्धैराचार्यैर्मुनिभिरन्यैर्वा आश्रमिभिर्बहु-

श्रुतैः र्दन्तान् संधायान्तर्मुख एव यावदर्थं संभाषीत

न यत्र लोपो भवतीति विज्ञायते ॥७२॥

स्थानमौनवीरासनानामन्यतमेन संप्रयोगो

न त्रयं संनिपातयेत् ॥७३॥

यत्र गतश्च यावन्मात्रमनुव्रतयेदापत्सु न यत्र लोपो

भवतीति विज्ञायते ॥७४॥

स्थानमौनवीरासनसवनोपस्पर्शनचतुर्थषष्ठाष्टमकालव्रतयुक्तस्य॥७५॥

अष्टौ तान्यव्रतघ्नानि आपो मूलं घृतं पयः ।

हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधमिति ॥७६॥

सायं प्रातरग्निहोत्रमन्त्राञ्जपेत् ॥७७॥

वारुणीभिः सायं संध्यामुपस्थाय मैत्रीभिः प्रातः ॥७८॥

अनग्निरनिकेतः स्यादशर्माऽशरणो मुनिः ।

भैक्षार्थी ग्राममन्विच्छेत्स्वाध्याये वाचमुत्सृजेदिति ॥७९॥

परिमिता वा ऋचः परिमितानि सामानि परिमितानि ॥८०॥

यजूंष्यथैतस्यैवान्तो नास्ति यद्ब्रह्म तत्प्रतिगृणत

आचक्षीत स प्रतिगर इति ॥८१॥

एवमेवैष आ शरीरविमोक्षणाद् वृक्षमूलिको वेदसंन्यासी ।।८२।।

वेदो वृक्षस्तस्य मूलं प्रणवः प्रणवात्मको वेदः ।।८३।।

प्रणवं ध्यायेत् ।।८४।।

'प्रणवो ब्रह्मभूयाय कल्पते' इति होवाच प्रजापतिः ।।८५।।

सप्तव्याहृतिभिर्ब्रह्मभाजनं प्रक्षालयेदिति ।।८६।।

*।। इति द्वितीयप्रश्ने दशमोऽध्यायः ।।*



## *अथ बोधायनीये पितृमेधसूत्रे*

## *तृतीयप्रश्ने एकादशः खण्डः*

अथातः परिव्राजकस्य संस्कारविधिं व्याख्यास्यामः - पृथिव्य 'अक्षीभ्यामोषधीभ्याम्' इति शरीरं निधाय 'भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम्' इति उदरे पात्रं निधायाथ होतारमधीत्य तस्य दक्षिणे हस्ते कमण्डलुं निदधाति ; व्याहृतीभिर्देवयजनं पूरयेत् ; 'अग्निनाऽग्निस्समिध्यते' इत्यशेषसंस्कारोऽश्वमेधफलं तत्रोदाहरन्ति ।।१।।

सृगालश्ववायसाः खादन्ति चेद्दोषमाहारयेत्कर्तुः ।
तस्मादविशङ्कां वेदिं प्रच्छादयेदिति बोधायनः ।।२।।

।। इति बोधायनीयें पितृमेधसूत्रे तृतीयप्रश्ने एकादशः खण्डः ।।

## *यतिसंस्कारविचारः*

### *बोधायनीये गृह्यशेषसूत्रे चतुर्थप्रश्ने सप्तदशाऽध्याये -*

अथातः सम्प्रवक्ष्यामि संस्कारविधिमुत्तमम् ।
समाहितानां युक्तानां यतीनां च महात्मनाम् ॥१ ॥

शुचौ देशे तु सावित्र्या देहं प्रक्षाल्य यत्नतः ।
आङ्कृत्य च गायत्र्या गन्धैर्माल्यैः पृथक् पृथक् ॥२ ॥

वहन्ति ब्राह्मणा ये वै शुचयः सर्व एव ते ।
तेषां तु वहतां सम्यक् सद्यःशौचं विधीयते ॥३॥

प्रक्षालनादितत्कर्म ये कुर्वन्ति महीयसाम् ।
तेषामपि तथा सद्यः शौचमेव विधीयते ॥४ ॥

पुत्रो वा सन्निकृष्टो वा शुचौ देशे निधाय तम् ।
उपावरोहमन्त्रेण तस्याग्नीनवरोप्य तु ॥५॥

तूर्ष्णीं सम्मार्जनं कृत्वा व्याहृतीभिश्च सप्तभिः ।
प्रोक्ष्य काष्ठं च तद्देहं निधाय तु समन्त्रकम् ॥ ६ ॥

विष्णो हव्यं रक्षस्वेति मुखे जलपवित्रकम् ।
पवित्रं तेति मन्त्रेण निदधाति तथा पुनः ॥ ७ ॥

त्रिदण्डं दक्षिणे हस्ते वैष्णव्यर्चा निधाय च ।
उदरे च तथा पात्रं सावित्र्या निदधाति वै ॥८ ॥

यदस्य पारे रजसस्सव्ये शिक्यं निधाय च ।
गुह्ये कमण्डलुं चैव भूमिर्भूमिमगादिति ॥९ ॥

पितृमेधप्रयोगेण दहेदग्निभिरेव हि ।
संस्कर्तुश्च तथा तस्य नाशौचं नोदकक्रिया ॥१० ॥
एकोद्दिष्टं न कुर्वीत सन्न्यस्तानांकदाचन ।
अहन्येकादशे प्राप्ते पार्वणं तु विधायते ॥११॥
द्वादश्यामह्नि वा पुण्ये नारायणबिर्भवेत् ।
सर्वं नारायणोद्देशमेकोद्दिष्टवदाचरेत् ॥१२ ॥
अनाहिताग्निनां चैव सन्न्यस्तानं महात्मनाम् ।
अपि होतृविधानेन गायत्र्या प्रणवेन वा ॥१३ ॥
अप्राकृतानां महतां ब्रह्मनिष्टमनस्विनाम् ।
तेषां तु खननं कार्यमिति प्राहुर्मनीषिणः ॥१४॥
तिसृभिर्व्याहृतीभिस्तु खात्वा दण्डप्रमाणतः ।
त्रिदण्डादीन् यथास्थानममन्त्रैस्स्थापयेद् बुधः ॥१५॥
प्रच्छादयेदसंस्पृष्टं सृगालश्वपचादिभिः ।
श्वादयो यदि खादन्ति महान् दोषो भविष्यति ॥१६॥
तस्माद् भूमिं भृशं खात्वा सम्क्प्रच्छादयेद्यतीन् ।
सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च ॥१७॥
न तस्य दहनं कुर्यान्नाशौचं नोदकक्रिया ।
निषेकाद्याः स्मशानान्तास्सत्क्रिया ब्राह्मणाश्रिताः ॥१८ ॥
तस्माद्यत्नेन संस्कारः कर्तव्यो गृहमेधिभिः ।
ये वहन्ति महात्मानं स्पृष्ट्वा दृष्ट्वा द्विजातयः ॥१९॥
हयमेधफलं तेषामस्तीत्येवं विदुर्बुधाः ॥२० ॥"

## ओङ्कारनिर्णयवर्णनम्

प्रणवाद्याः स्मृता मन्त्राश्चतुर्वर्गफलप्रदाः ।
तस्माच्च निःसृताः सर्वे प्रीयन्ते च तत्र वै ॥ १ ॥
मङ्गल्यः पावनो धन्यः सर्वकामप्रसाधनः ।
ओङ्कारः परमं ब्रह्म सर्वमन्त्रेषु नायकः ॥ २ ॥
प्रजापतेर्मुखोत्पन्नस्तपः सिद्धस्य वै पुरा ।
तेनोपात्तमतस्तस्य ब्रह्मार्षं (ब्रह्माऽऽर्षं) च स्वयभुवः ॥ ३ ॥
गायत्री च भवेच्छन्द अग्निर्दैवतमुच्यते ।
आदौ सर्वत्र युञ्जीत विविधेष्वेव कर्मसु ॥ ४ ॥
विनियोगः समुद्दिष्टः श्वेतो वर्ण उदाहृतः ।
त्रिमात्रश्च प्रयोक्तव्यः कर्मारम्भेषु सर्वदा ॥ ५ ॥
तिस्रः सार्धास्तु कर्तव्या मन्त्रतत्त्वार्थचिन्तकैः ।
देवताध्यानकाले तु प्लुतं कुर्यान्न संशयः ॥ ६ ॥
तैलधारावदच्छिन्नं दीर्घघण्टानिनादवत् ।
अवाग्जं प्रणवास्यान्तं यस्तं वेद स वेदवित् ॥ ७ ॥
वक्रं तद्भवति ह्यादौ ओङ्कारं चतुरक्षरम् ।
ऋजुत्वं सम्प्रपद्येत पदं प्राप्य तु पञ्चमम् ॥ ८ ॥
ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ ९ ॥
तस्मादोमित्युदाहृत्य यज्ञदानतप क्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ १० ॥

उद्गीथाक्षरमेद्ब्रह्मविदो ब्रह्मणो योगम् ।
पाशुपताश्च वदन्ति हि साङ्ख्याश्चाध्यात्मतत्वज्ञाः ।। ११ ।।
मात्रास्तिस्त्री व्यक्ताऽव्यक्ता तथा परा सूक्ष्मा ।
अध्यात्ममधिभूतामथाधिदैर्वी विजानीयात् ।। १२ ।।
सिद्धान्तानां तु सर्वेषां वेदवेदान्तयोस्तथा ।
अन्येषामपि शास्त्राणां निष्ठाकारमुच्यत ।। १३ ।।
प्रणवाद्याः स्मृता वेदाः प्रणवे पर्युपस्थिताः ।
वाङ्मयं प्रणवः सर्वं तस्मात् प्रणवमभ्यसेत् ।। १४ ।।
ओङ्कारः प्रणवस्तारस्त्र्यक्षरस्त्रिगुणः स्मृतः ।
उद्गीथश्च तथादित्यो हंसो नारायणो विभुः ।। १५ ।।
सूर्यस्यान्तर्गतं सूक्ष्मं विष्णुं दिव्यं निरञ्जनम् ।
पर्यायैश्च तथा चान्यैः शास्त्रेभ्यः सम्प्रगीयते ।। १६ ।।
ओङ्कारसञ्ज्ञं त्रिगुणं त्र्यक्षरं च त्रिदैवतम् ।
त्रिब्रह्म त्रिरवस्थानं त्रैकाल्यं त्रिप्रतिष्ठितम् ।। १७ ।।
त्रिप्रज्ञं च त्रिधामं च त्रिरवस्थं त्रिलिङ्गकम् ।
त्रिधातुकं समुद्दिष्टं सर्वगं परमेश्वरम् ।। १८ ।।
सत्वं रजस्तमश्चैव त्रिगुणस्तेन स स्मृतः ।
अकारश्चाप्युकारश्च मकारश्चाक्षरत्रयम् ।। १९ ।।
ब्रह्मा विष्णुश्च रुद्रश्च त्रिदैवत्य उदाहृतः ।
अगिनवायुरविभ्यश्च त्रिमात्र इति सञ्ज्ञितः ।। २० ।।
ऋग्यजुश्च तथा साम त्रिब्रह्म इति सञ्ज्ञितः ।

भूर्भुवः स्वस्त्र्यवस्थानं हृत्कण्ठं तालुकेति च ।। २१ ।।
तुर्ये प्राणे तथाऽऽदित्ये त्रिषु चैव प्रतिष्ठितम् ।
भूतं भव्यं भविष्यं च त्रैकाल्यं तेन चोच्यते ।। २२ ।।
अन्तःप्रज्ञो बहिःप्रज्ञो घनप्रज्ञ उदाहृतः ।
गार्हपत्यो दक्षिणाग्निराहवनीयस्त्रिधामकम् ।। २३ ।।
शान्तो घोरस्तथा मूढस्त्रिरवस्थ इति स्मृतः ।
स्त्री पुं नपुंसकं चेति त्रिलिङ्ग इति च स्मृतः ।। २४ ।।
वातः पित्तं तथा श्लेष्मा त्रिधातुः समुदाहृतः ।
त्रिप्रकारं विदित्वा तु ओङ्कार मुच्यते द्विजः ।। २५ ।।
एकैका तु भवेन्मात्रा त्रिगुणा सा तु वै पुनः ।
तासां सर्वं वाङ्मयं यदोतं प्रोतं व्यवस्थितम् ।। २६ ।।
प्रथमा तस्य अकारो वाक् सत्वं भूहुताशनो विष्णुः ।
स्थूला जाग्रद्वृत्तिर्विज्ञेया योगतत्वज्ञैः ।। २७ ।।
ब्रह्मान्तरिक्षसञ्ज्ञो मनोरजः सोमसञ्ज्ञक उकारः ।
मात्रा स्वप्नविकल्पा (वि) सृष्टिसञ्ज्ञा द्वितीया तु ।। २८ ।।
रौद्री मकारसञ्ज्ञा प्राणाख्या तामसी तृतीया तु ।
संहरति जगत् समस्तं (सर्वं) सौषुम्णाख्या महानिद्रा ।। २९ ।।
आद्या परतरा सूक्ष्मा शान्ता गान्धर्वनिरवयवा ।
अनभिलक्ष्या सौम्या मकारसञ्ज्ञा विज्ञाकाशसम्बद्धा ।। ३० ।।
प्रपञ्चो ब्रह्मणश्चोक्तः सार्धमात्रत्रयं बुधैः ।
अउमिति तिस्त्रो मात्रा मकारश्चार्धमात्रकः ।। ३१ ।।

तिस्रो मात्रा लयं यान्ति अर्धमात्रे न संशयः ।
अर्धमात्रात्वमात्रे तु लयं याति निरामये ।। ३२ ।।
अकारे पीड्यमाने तु उकारं प्रपिद्यते ।
उकारे पीड्यमाने तु मकारं प्रतिपद्यते ।। ३३ ।।
मकारे पीड्यमाने तु अर्धमात्रा तदा भवेत् ।
जिह्वायां पीड्यमानायां निरालम्बं तदा भवेत् ।। ३४ ।।
एकमात्रं द्विमात्रं च त्रिमात्रं कृत्स्नमेव च ।
ह्रस्वदीर्घप्लुतं शान्तं शान्तेन मनसोद्धरेत् ।। ३५ ।।
समाहितमना भूत्वा तत्वध्यानपरायणः ।
ओङ्कारं यस्त्वभिध्यायोधध्यात्मैक इति स्मृतः ।। ३६ ।।
सर्वे वेदा यत्पदमामनन्ति
तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत् ।। ३७ ।।
एतदेवाक्षरं ब्रह्म एतदेवाक्षरं परम् ।
एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ।। ३८ ।।
सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ।। ३९ ।।
ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्तरम् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ।। ४० ।।
आद्यं यदक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता ।

स गुह्योन्यस्त्रिवृद्वेदो यो वेदैनं स वेदवित् ।। ४१ ।।

यथा वै शङ्कुना पर्णं संवृता एव सर्वतः ।

एवं सर्वास्तु वै वाचः सन्तीर्णा प्रणवेन तु ।। ४२ ।।

क्लेशकर्मविपाकैश्च वासनाभिस्तथैव च ।

अपरामृष्टमेवाह पुरुषं हीश्वरं श्रुतिः ।। ४३ ।।

वाच्यो यज्ञेश्वरः प्रोक्तो वाचकः प्रणवः स्मृतः ।

वाचकेन तु विज्ञातो वाच्य एव प्रसीदति ।। ४४ ।।

तदर्थं प्रणवं जप्यं ध्यातव्यं सततं बुधैः ।

ईश्वरः पुरुषाख्यस्तु तेनोपास्तुः (स्तः) प्रसीदति ।। ४५ ।।

यथा हि गौर्वत्सकृतं निशम्य हुङ्कृत्यवत्साभिमुखी प्रयाति ।

ब्रह्मापि तद्वत् प्रणवोपहूतं वक्तारमागच्छति आशु वक्त्रे ।। ४६ ।।

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।

शब्दब्रह्माणि निष्णातः परं ब्रह्माधिगच्छति ।। ४७ ।।

अन्तःशरीरप्रभवमुदानप्रेरितं च यत् ।

वागुच्चार्यं श्रोत्रवृत्ति शब्दब्रह्म तदुच्यते ।। ४८ ।।

शब्दब्रह्मात् परं ब्रह्म तस्मिन् क्षीणे यदक्षरम् ।

तदक्षरं सदा ध्यायेद्यदीच्छेद्योगमात्मनः ।। ४९ ।।

अकारश्चाप्युकारश्च मकारो बिन्दुरेव च ।

मात्रास्तद्विनियोगश्च प्रणवः पञ्चलक्षणः ।। ५० ।।

ओङ्कारः प्रणवे योज्यो ब्रह्मणि प्रणवस्तथा ।

आनन्दं तत् परं ब्रह्म तत् प्रविश्यामृती भवेत् ।। ५१ ।।

वेदादौ यः स्वरः प्रोक्तो वेदान्ते यः प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ।। ५२ ।।
यतो वाचो निर्वन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन ।। ५३ ।।
प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ।। ५४ ।।
स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ।। ५५ ।।
शब्दस्पर्शादिभिश्चैव रसरूपैरलक्षितः ।
देवतायाः परस्यास्तु आलम्बः प्रणवः स्मृतः ।। ५६ ।।
कश्चिदाराधनाकामो विष्णोर्भक्त्या करोति वै ।
तदाराधनसिद्ध्यर्थं प्रतिमां व्यञ्जिकां यथा ।। ५७ ।।
धातुदार्वादिपाषाणैः कृत्वा भावं निवेशयेत् ।
भक्त्या श्रद्धादराभ्यां च तस्य विष्णुः प्रसीदति ।। ५८ ।।
आर्यैः प्रपूजितो यत्र प्रत्यक्षे च फलप्रदः ।
ओङ्कारेण तथा ह्यात्मा उपास्तः स प्रसीदति ।। ५९ ।।
एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मभूयाय कल्पते ।। ६० ।।
अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः ।
तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदति ।
तस्मादोमिति पूर्वं तु कृत्वा युञ्जीत तत्परः ।। ६१ ।।

ब्रह्मविदोऽनेकविधाः सततं येन प्रवर्तन्ते ।

गूढव्रतस्य हि सदा विशुद्धबुद्धेः स(सु) गूढठित्तस्य ।

प्रणवध्यानपरस्य च स(सु) गूढतपसो भयं नास्ति ।। ६२ ।।

एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ।

सावित्र्यास्तु परं नास्ति मौनात् सत्यं विशिष्यते ।। ६३ ।।

प्रणवे नित्ययुक्तस्स्य व्याहृतीषु च सप्तसु ।

त्रिपदायां च गायत्र्यां न भयं विद्यते क्वचित् ।। ६४ ।।

आद्यास्तु व्याहृतीस्तिस्रो गायत्रीस्वशिरोय (यु) ताम् ।

ओङ्कारं विन्दते यस्तु स मुनिर्नेतरो जनः ।। ६५ ।।

एक एव हि विज्ञेयः प्रणवो योगसाधनम् ।

गृहीतः सप्तसिद्धान्तैरन्यैश्च ब्रह्मवादिभिः ।। ६६ ।।

हिरण्यगर्भैः कपिलैरपान्तरतमैस्तथा ।

सनत्कुमारैर्ब्रह्मिष्ठैस्तथा पाशुपतैरपि ।। ६७ ।।

पाश्वरात्रैः सदेद्युक्तैः सिद्धान्तैरपि सप्तभिः ।

भैदैस्त्रिषष्टिभिर्भिन्नमेकैकं नवधा पुनः ।। ६८ ।।

त्रिमात्रं चैव त्रिब्रह्म त्र्यक्षरं प्रणवं प्रभुम् ।

हिरण्यगर्भा इच्छन्ति योगसाधननिश्चितम्[१८] ।। ६९ ।।

अग्निर्वायुस्तथादित्यस्तिस्रो मात्राः प्रकीर्तिताः ।

ऋग्यजुश्च तथा साम त्रिब्रह्मेति प्रकीर्तितम् ।। ७० ।।

अकारश्चाप्युकारश्च मकारश्चाक्षरत्रयम् ।

ओङ्कारः परमं धाम ओङ्कारः परमा गति ।। ७१ ।।

ओङ्कारः विन्दते यस्तु तस्य जन्म न विद्यते ।

त्रिप्रङ्गं च त्रिगुणं त्रिकारणमिति कापिलाः ।। ७२ ।।

व्यक्तोऽव्यक्तस्तथाङ्गश्च त्रिप्रङ्ग इति स स्मृतः ।

ओङ्कारस्त्रिगुणं सर्वं व्यञ्जनं निर्गुणं विदुः ।। ७३ ।।

त्रिमुखं च त्रिदैवत्यं त्रिप्रयोजनमेव च ।

अपान्तरतमैश्चैव ओङ्कारस्तु प्रकीर्तितः ।। ७४ ।।

गार्हपत्यो दाक्षिणाग्निराहवनीयस्तृतीयकः ।

त्रिमुखः स तु विज्ञेयो ब्रह्मविष्णुमहेश्वराः ।। ७५ ।।

एतत् त्रिदैवतं ज्ञेयं धर्मश्चैवार्थएव च ।

कामेन सहितौ ह्येतौ त्रयं प्रोक्क्तं प्रयोजनम् ।। ७६ ।।

भूर्भुवः स्वरिति चैव चतुर्विंशाक्षरा तथा ।

गायत्री चतुरो वेदा ओङ्कारः सर्वमेव तु ।। ७७ ।।

ऋग्वेदे स्वरितोदात्त एकाक्षर उदाहृतः ।

त्रैस्वर्यं च तथोदात्तो यजुर्वेदे च पठ्यते ।। ७८ ।।

दीर्घप्लुतः सामवेदे ओङ्कारस्तु न संशयः ।

सङ्क्षिप्तोदात्तमेवाहुरेकाक्षर उदाहृतः ।। ७९ ।।

आकरश्च उकारस्तु प्रविष्टो ह्येकदा यदा ।

अउवर्णसमायोगादोङ्कारः समपद्यत ।। ८० ।।

अनुस्वारो मकारस्तु ओङ्कारस्य शिरो यदा ।

प्रकृतिः साधनं कृत्वा व्यञ्जनादौ तु लुप्यते ।। ८१ ।।

नपुंकस्तथोङ्कारो वेदानां परिकीर्तितः ।

अपान्तरतमो ज्ञेयो वेदसिद्धान्तयोरपि ।। ८२ ।।

त्रिकालं च त्रिलिङ्गं च त्रिसञ्ज्ञं च तथा विदुः ।

सनत्कुमारसिद्धान्ते ओङ्कारः समुदाहृतः ।। ८३ ।।

भूतं भव्यं भविष्यं च कालत्रयमुदाहृतः ।

स्त्रीपुं नपुंसकश्चैव त्रिलिङ्ग इति स स्मृताः ।। ८४ ।।

बहिःसञ्ज्ञो मध्यसञ्ज्ञ अन्तःसञ्ज्ञ इति स्मृतः ।

उद्गीथमक्षरं ह्येतदुद्गीथश्च उपास्यते ।। ८५ ।।

ओमित्युद्गीयते ह्येष भूते भव्ये भविष्यति ।

त्रिस्थानं त्रिपदं त्रिपदं चैव त्रिसञ्ज्ञं च प्रकीर्तितम् ।। ८६ ।।

ब्रह्मिष्ठानां भवेदेवं गुह्येपूपनिषत्सु च ।

हृत्कण्ठतालुकादीनि स्थानानि समुदाहरेत् ।। ८७ ।।

जाग्रत् स्वप्नं च पदान्येतानि तस्य तु ।

बहिःसञ्ज्ञस्तथान्तश्च धनप्रज्ञः स्वयं विभुः ।। ८८ ।।

एतदक्षरमोङ्कारं भूतं भव्यं भविष्टति ।

त्रिप्रज्ञं त्रिपदं चैव सर्वव्यापि तथोच्यते ।। ८९ ।।

बहिःप्रज्ञो विभुर्विश्व अन्तःप्रज्ञस्तु तैजसः ।

घनप्रज्ञस्तथा प्रोक्त एक एव त्रिधा भवेत् ।। ९० ।।

दक्षिणाग्निमुखे विश्वो मनस्यन्तस्तु तैजसः ।

आकाशे तुर्यदप्राज्ञस्त्रिधा देहे व्यवस्थितः ।। ९१ ।।

स्थूलो वैश्वानरो नित्यं तैजसोन्तः प्रकृतिभुक् ।

आनन्दभुक् तथा प्राज्ञ एक एव त्रिधा भवेत् ।। ९२ ।।

सत्वाश्चैव प्रयत्नेन ब्रह्मा (ह्य) भवति मानवः ।
स्थूलं तपयते विश्वं प्रविविक्तं तु तैजसम् ।। ९३ ।।
आनन्दश्च तथा प्राज्ञं त्रिधा तृप्तिं निबोधत ।
त्रिषुधामसु यद्भोज्यं भोक्ता यस्तु प्रकीर्तितः ।। ९४ ।।
उभयं विन्दते यस्तु स भुञ्जानो न लिप्यते ।
प्रभवः सर्वभूतानां सतामिति विनिश्चयः ।। ९५ ।।
प्रणवः सूयते सर्वं वेत्ता यः पुरुषः स्मृतः ।
त्र्यवस्थानं त्रिभोक्तारं त्रिभोज्यं च तथा परम् ।। ९६ ।।
एवं पाशुपते विद्यात् सिद्धान्ते प्रणवं विभुम् ।
शान्तं घोरं तथा मूढं त्रिरवस्थानमेव तु ।। ९७ ।।
शरीरमापः सोमश्च त्रिभोज्यमिति कीर्तितम् ।
प्राणोह्यग्निस्तथादित्यस्त्रिभोक्ता इति स स्मृतः ।। ९८ ।।
ओङ्कारं समभिध्यायेद्हृदि कृत्वा तु धारणाम् ।
ऋषिपुत्रो महातेजा वाग्विशुद्धो महेश्वरः ।। ९९ ।।
त्रिरात्मा त्रिस्वभावश्च तता त्रिव्यूह एव च ।
पाञ्चरात्रे स्मृतो ह्येष भगवद्वाचकः स्मृतः ।। १०० ।।
बलं विर्यं तथा तेजस्त्रिरात्मा इति सञ्ज्ञितः ।
ज्ञानैश्वर्यं तथा शक्तिस्त्रिस्वभाव इति स्मृतिः ।। १०१ ।।
सङ्कर्षणोथ प्रद्युम्नो(म्नः) अनिरुद्धस्तथैव च ।
त्रिव्यूह इति निर्दिष्टः ओङ्कारो विष्णुरव्ययः ।। १०२ ।।
भगवद्वाचकः प्रोक्तः प्रकृतेर्वाचकस्तथा ।

व्यक्ताऽव्यक्तो वासुदेवः प्रभवः प्रायस्तथा ।
वाथुलेरेकमात्रस्तु ओङ्कारः समुदाहृतः ।। १०३ ।।
यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं सम्प्रहेणाभिधास्य ।। १०४ ।।
ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ।। १०५ ।।
एवं त्रिषष्टिभेदैस्तु सिद्धान्तेषु प्रगीयते ।
स्थूलभेदेन चोङ्कारश्चतुः षष्टि(ष्ठ) स्तु निष्फलः ।। १०६ ।।
विष्णुंनिरञ्जनं शान्तमानन्दं सर्वदेहिनाम् ।
अक्षरं तं विजानीयात् स्थूलं च क्षरसञ्ज्ञितम् ।। १०७ ।।
न च स्थूलं न च ह्रस्वं न च दीर्घं न च प्लुतम् ।
न लोहितं न कृष्णं च सर्ववर्णविवर्जितम् ।। १०८ ।।
इन्द्रियैरिन्द्रियार्थैश्च तत्वैश्च परिवर्जितम् ।
ध्रुवं च शाश्वतं नित्यमचलं लयवर्जितम् ।। १०९ ।।
अक्षरं चाजरं चैवमनुत्पन्नमनाशि च ।
सर्वमात्राविनिर्मुक्तमानन्दं ब्रह्म निष्कलम् ।। ११० ।।
अघोषमव्यञ्जनमस्वरं च
यत्कव्य(ण्ठ) तालव्यमनासिकं च ।
अरेफजातस्वरमोष्ठवर्जितं
तदक्षरं स्वरति स्वयं भवम् ।। १११ ।।

ओङ्कारं विपुलमचिन्त्यमप्रमेयं

सूक्ष्माकारं ध्रुवमचलं शिवं पुराणम् ।

तद्विष्णोः पद (पदं) मुखपङ्कजप्रसूतं

देहान्तः स्थंमनसि च यत् स्थितिं करोति ।। ११२ ।।

दशनामानि नैरुक्ता ओङ्कारस्य प्रचक्षते ।

अन्वर्थं कानि तानीह वेदितव्यानि धीमता ।। ११३ ।।

ओङ्कारं प्रणवं चैव सर्वव्यापिनमेव च ।

अनन्तं च तथा तारं शुक्लं वैद्युतमेव च ।। ११४ ।।

हंसं तुर्यं परं ब्रह्म इति नामानि जानत ।

निष्कलस्य तु सर्वज्ञः पर्यायेण हि कीर्तितः ।। ११५ ।।

उच्चार्यमाणः सर्वत्र आपादतलमस्तकम् ।

उन्नामयेच्छरीरं तु ओङ्कारस्तेन चोच्यते ।। ११६ ।।

ऋग्यजुः समामाथर्वाणि देवताश्चाक्षरत्रयम् ।

शरीरं वाङ्मनश्चैव प्राणनात् प्रणवः स्मृतः ।। ११७ ।।

शरीरं चैव विश्वं च विद्यास्थानानि सर्वशः ।

व्याप्य सन्तिष्ठते यस्मात् सर्वव्यापी ततः स्मृतः ।। ११८ ।।

अनन्तं नयते स्थानं तस्य चान्तो न लभ्यते ।

ऋषिदेवमनुष्येषु अनन्तस्तेन कीर्तितः ।। ११९ ।।

सर्वदुखसमुत्त्थानाद्भवग्राहर्णवाकुलात् ।

चिन्तितस्तारयेद्यस्मात्तेन तारो निगद्यते ।। १२० ।।

वर्णेन च भवेच्छुक्लः शुद्धं च नयते पदम् ।

त्रिविधं शोषयेत् पापं तेन शुक्ल इति स्मृतः ।। १२१ ।।

आविष्करोति स यतेज्योंतीरूपं भ्रुवो(र)न्तरे ।

विद्योतते तमो भित्वा वैद्युतस्तेन कीर्तितः ।। १२२ ।।

हृदि ध्यानं सदा यस्मादादित्योग्दीथमेव च ।

भित्वा शरीरं नयति तस्माद्धंस इति स्मृतः ।। १२३ ।।

जाग्रत् स्वप्नं च सुप्तं च तुर्यं चैव चतुर्थकम् ।

ज्ञातस्तु त्रायते यस्मात् तुर्यस्तेन निगद्यते ।। १२४ ।।

वाङ्मयस्य तु सर्वस्य ब्रह्मणस्त्रिविधस्य च ।

मुखमेतत् समुद्दिष्टं शब्दब्रह्ममयं विभुः ।। १२५ ।।

परं ब्रह्म नयत्वेव परब्रह्म इति स्मृतिः ।

एवं नैरुक्तकैर्द्दृष्टमृषिभिश्च तथा परैः ।। १२६ ।।

बाष्कलैरेकमात्रस्तु ओङ्कारः समुदाहृतः ।

रुचकायन आचार्यो द्विमात्रं चेच्छते सदा ।। १२७ ।।

द्विमात्रश्चार्दमात्रस्तु नारदस्य मतेन तु ।

मौद्गलस्य त्रिमात्रस्तु ओङ्कारो नात्र संशयः ।। १२८ ।।

वशिष्ठस्य मतेनैव मात्राचात्र चतस्रिका(?)

त्रिमात्रो मनुना चोक्तस्तथान्यैर्ऋषिसत्तमैः ।। १२९ ।।

पराशरैश्चतुर्मात्रस्तता स्वध्यात्मचिन्तकैः ।

ह्रस्वं दीर्घं प्लुतं शान्तं चतुर्धा सम्प्रकीर्तितम् ।। १३० ।।

भवेत् कर्मवशादेवमन्यथा तु त्रिरक्षरम् ।

भगवान् याज्ञवल्क्यस्तु अमात्रं चेच्छते सदा ।। १३१ ।।

यः शब्दमय ओङ्कार उच्चार्यः स्थूल एव सः ।
अमात्रश्चाप्यनुच्चार्य परोङ्कारः स उच्यते ।। १३२ ।।
तिस्रः सार्धास्तथा मात्राः स गृह्णाति यथाक्रमम् ।
परं ब्रह्म तमेवाहुश्चात्मनं ब्रह्मचिन्तकाः ।। १३३ ।।
यत् पूर्वं तु समुद्दिष्टमोङ्काराग्रे व्यवस्थितम् ।
अक्षरैश्च पदैश्चैव अतीतं पञ्चमं पदम् ।। १३४ ।।
यं (यत्) प्राप्य विन(नि) वर्तन्ते ओङ्कारस्य पथि स्थिताः ।
मनसात्र समाधाय शरीरं लिङ्गमानवम् ।। १३५ ।।
सङ्कल्पं व्यवसायं च अभिमानाख्यसञ्ज्ञकम् ।
चेतनाधिष्ठितं सूक्ष्मं तथा सूक्ष्मैः सहैव तु ।। १३६ ।।
ओङ्कारपद्मनालेन हृद उद्धृत्य योजयेत् ।
परमे व्योम्न्यनन्ताख्ये सर्वसङ्कल्पवर्जिते ।। १३७ ।।
तस्मिन्स्तावन्निरोद्धव्यं मनश्चोङ्कारमेव च ।
यावन्निर्मातां याति एष योग उदाहृतः ।। १३८ ।।
मनो युञ्ज्यात्तथोङ्कारे ओङ्कारं प्रणवे तथा ।
प्रणवं ब्रह्मणि स्थाप्य न किञ्चिदपि चिन्तयेत् ।। १३९ ।।
प्रणवो विमलः शुद्धो निःशब्दो व्योमसञ्ज्ञकः ।
तस्मादुत्पद्यते प्राणः पुनस्तत्रैव लीयते ।। १४० ।।
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ।
दुःखे भयाभिधातार्थे सर्वथा प्रणवं स्मरेत् ।। १४१ ।।
प्रणवो ह्यपरं ब्रह्मप्रणवश्च परः स्मृतः ।

प्रणवो ह्यदि सर्गस्य अन्तो मध्यस्तथैव च ।। १४२ ।।

एवं हि प्रणवं ज्ञात्वा विशन्ति ब्रह्म निष्कलम् ।

अपूर्वोऽनन्तारोऽबाह्योऽनपरः प्रणवोऽव्ययः ।। १४३ ।।

प्रणवो हीश्वरो देवो हृदि सर्वस्य धिष्ठितः ।

सर्वव्यापिनमोङ्कारं मत्त्वा धीरो न सीदति ।। १४४ ।।

अमात्रं च त्रिमात्रं च अद्वैतं ब्रह्म तत् परम् ।

स्थूलं चाप्यतिसूक्ष्मं च सर्वतः किमपि स्थितम् ।। १४५ ।।

ओङ्कारं विन्दते यस्तु स भवेद्वेदविद्विजः ।

यथा पत्रं फलं पुष्पं शङ्कुनैकेन धार्यते ।। १४६ ।।

तथा जगदिदं सर्वमोङ्कारेणैव धार्यते ।

जप्येन दहते पापं प्राणायामैस्तथा मलम् ।। १४७ ।।

ध्यानेन जन्म निर्घातं धारणाभिश्च मुच्यते ।

ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।। १४८ ।।

स्त्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीयते ।

प्रोक्षणे पोषणे चैव प्रतिष्ठाने प्रतिग्रहे ।। १४९ ।।

आश्रावणे वषट्कारे प्रत्याश्रावे जपेऽपि च ।

सामसु ब्रह्ममुख्येषु ऋग्यजुस्तोत्रशस्त्रयोः ।। १५० ।।

सवमन्त्रप्रयोगेषु ओमित्यादौ प्रयुज्यते ।

तेन सम्परिपूर्णानि यथोक्तानि भवन्ति च ।। १५१ ।।

सर्वमन्त्राधिराजेन ओङ्कारेण न संशयः ।

यदूनं चातिरिक्तं च यच्छिद्रं यदयाज्ञिकम् ।। १५२ ।।

यदमेध्यमशुद्धं वा यातयामं च यद्भवेत् ।
ओङ्कारेण प्रयुक्तेन सर्वं चाविफ(क)लं भवेत् ।। १५३ ।।
अनूनं नातिरिक्तं च अच्छिद्रं याज्ञिकं तथा ।
मेध्यं शुद्धायातयामं पवित्रं मङ्गलं तथा ।। १४५ ।।
सर्वमङ्गलमाङ्गल्यं सवब्रह्ममयं विभुम् ।
पावनं मोक्षदं पुण्यं सर्वदेवमयं विभुम् ।। १५५ ।।
विदित्वा मुच्यते क्षिप्रं जन्मसंसारबन्धनात् ।
मुक्तो न जायते भूयो ब्रह्मभूतः सनातनः ।। १५६ ।।
एतत् सङ्क्षेपतः प्रोक्तमोङ्कारागुणवर्णनम् ।
विस्तरेण न शक्यन्ते वक्तुं वर्षातैरपि ।। १४७ ।।
योगाचार्येण सञ्चिन्त्य याज्ञवल्क्येन धीमता ।
ओङ्कारनिर्णयो ह्येष प्रोक्तः शिष्यहितैषिणा ।।
श्लोकानां द्वेशते प्रोक्तं निर्णयः समुदाहृतः ।। १५८ ।।

*इति श्रीबृहद्योगियाज्ञवल्क्ये*

*ओङ्कारनिर्णयो नाम द्वितीयोऽध्यायः ।*

## *अथ बोधायनीये गृह्यशेषसूत्रे प्रथमोऽध्यायः*

अथातः पवित्राणां पवित्रायातिपवित्रायापराजिताय गुह्याय ब्रह्महृदयाय ओंकारकल्पं व्याख्यास्यामः ।। यत्र ग्राम्याणां पशूनां शब्दं नोपशृणुयादपां समीपे ब्रह्मवृक्षेणैकस्थूणां कुटीं प्राङ्मुखां कारयेत् ।।

कुशध्वजी कुशवेष्टी कुशचीरवासाः कुशोपवीतः कुशोपविष्टः कुशहस्तः कुशमेखलां धारयमाणः त्रिषवणस्नायी कुशशायी शाकयावकयोर्भैक्षाहार आदित्याभिमुखस्तिष्ठन्नोङ्कारं पञ्चसहस्रं जपेत्ततोऽस्य मन्त्रास्सर्वे सिध्यन्ति सर्वे वेदा अधीता भवन्ति सर्वेषु वेदेषु चीर्णव्रतो भवति सर्वेषु तीर्थेषु स्नातो भवति सर्ववेदो ज्ञातो भवति सर्वैर्देवैर्ज्ञातो भवति सर्वयज्ञक्रतुभिरिष्टवान् भवत्याचक्षुषः पङ्क्तिं पुनाति मातापितृदोषैः पुरुषदोषैश्च निर्दोषः पूतो भवति चण्डालश्वपाकानां पुनाति ।।

श्वेतायास्सरूपवत्सायाः पयसि स्थालीपाकं श्रपयित्वाऽऽदित्याभिमुख ओङ्कारसहस्रेणाभिमन्त्रितं कृत्वा स्वयं प्राश्नीयात् सप्तानां पुरुषाणामलक्ष्मीं नुदति जातिस्मरत्वं लभते श्रियं देवीं भजते ब्रह्मचर्यमस्याविच्छिन्नं सन्ततं भवति ।।

प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिता : ।
वाङ्मयं प्रणवं सर्वं तस्मात्प्रणवमभ्यसेत् ।।
प्रणवेन विहीनं यत्तन्मन्त्रं प्राणहीनकम् ।
सर्वमन्त्रेषु मन्त्राणां प्राणः प्रणव उच्यते ।।

इत्याह भगवान् बोधायनः ।।

*।। इति बोधायनीये गृह्यशेषसूत्रे तृतीयप्रश्ने प्रथमोऽध्यायः।।*

।। श्रीकृष्णार्पणमस्तु ।।

## ।। अथ यतिधर्मप्रकरणनम् ।।

अथ प्रव्रजितानां धर्मान्वक्तुमुपक्रमते—

**वनाद् गृहाद्वा कृत्वेष्टिं सर्ववेदसदक्षिणाम् ।**
**प्राजापत्यां तदन्ते तानग्नीनारोप्य चात्मनि ।।५५।।**

**अधीतवेदो जपकृत् पुत्रवानन्नदोऽग्निमान् ।**
**शक्त्या च यज्ञकृत्मोक्षे मनः कुर्यात्तु नान्यथा ।।५६।।**

ब्रह्मचर्येऽधीतवेदः संध्योपासनादिरूपनित्यनैमित्तिकजपकारी गार्हस्थ्ये यथाविध्युत्पादितपुत्रो देवपितृमनुष्यादिभ्योऽन्नदाय्यावश्क श्रौतस्मार्ताग्निसाध्यकर्मकारी यथाशक्ति यज्ञानुष्ठायीत्यादिविशेषणा-द्वानप्रस्थाश्रमाद्गृहस्थाश्रमाद्वा प्रजापतिदेवताकां सर्वस्वदक्षिणामिष्टिं मोक्षे मोक्षोपाये पारिव्राःज्ये कुर्यात् । पारिव्राज्यं संकल्पयेदित्यर्थः ।यज्ञशब्देनात्र सोमयागो विवक्षितः । तस्य च बहुसामग्रीसाध्यत्वादग्निमानि इत्युक्त्वाऽपि यज्ञकृदिति पृथङ्निर्देशात् । एतच्च गार्हस्थ्यपूर्वके पारिव्राज्ये विधानं द्रष्टव्यम् । ब्रह्मचर्यमात्रपूर्वके तु पुत्रवत्त्वादि विशेषण मिष्टिश्चासंभवान्निवर्तते । अस्ति च ब्रह्मचर्यानन्तरं संन्यासः।

तथाच जाबालश्रुतिः —'ब्रह्मचर्यं परिसमाप्य गृही भवेत् । गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्यादेव परिव्रजेद्गृहाद्वनाद्वा' इति ।

**शङ्खलिखितौ** –"वनवासादूर्ध्वं शान्तस्य परिणतवयसः कामतः प्रव्रज्या, तमेवाग्निमात्यन्यारोप्य व्यपगतभयलोभमोहक्रोधशोकद्रोह-

मदमत्सरः कालं नानुचिन्तयेदनवस्थितत्वान्मनसः श्रद्धा ह्यनियता भवति । तस्मान्न श्वः श्वः समुपासीत । तदहरेव संन्यसेत्सर्वारम्भ-परिग्रहानुत्सृज्य'' ।

**अत्र बौधायनः –**

''अथातः संन्यासविधिं व्याख्यास्यामः । सोऽत एव ब्रह्मचर्यवान्प्रव्रजतीत्येकेषामथ शालीनयायावराणामनपत्यानां विधुरो वा प्रजां स्वधर्मे प्रतिष्ठाप्य वा सप्तत्या ऊर्ध्वं संन्यासमुपदिशन्ति, वानप्रस्थस्य वा कर्मविरामः

**'एष नित्यो महिमा ब्राह्मणस्य'**
**'न कर्मणा वर्धते नो कनीयान्'**

तस्यैवाऽऽत्मा पदवित्तं विदित्या न कर्मणा लिप्यते पापकेने त्यपुनर्भावं नयतीति, नित्यो महदेनं गमयतीति महिमा । केशश्मश्रु-नखानि वापयित्वा स्नात्वोपकल्पयते, यष्टयः शिक्यं जलपवित्रं कमण्डलुं पात्रमित्येतत्समादाय ग्रामान्ते ग्रामसीमान्तेऽग्न्यागारे वाऽऽज्यं पयो दधीति त्रिवृत्प्राश्योपवसेदपो वा ।।

ॐ भूः सावित्रीं प्रविशामि, तत्सवितुर्वरेण्यं
ॐ भूवः सावित्रीं प्रविशामि, भर्गो देवस्य धीमह्यों
स्वः सावित्रीं प्रविशामि, धियो यो नः प्रचोदयात्

इति पच्छोऽर्धत्रशस्ततः समस्तया चाऽऽत्मानमात्मना आश्रमा-दाश्रमान्तरमुपनीय ब्रह्मभूतो भवतीति विज्ञायते ।

**अथाप्युदाहरन्ति –**

आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः ।
भिक्षाबलिपरिश्रान्तः पश्चाद्भवति भिक्षुक इति।।

स एष भिक्षुरानन्त्याय पुराऽऽदित्यस्यास्तमयाद्गार्हपत्यमुपसमाधायान्वाहार्यपचनमत्द्दत्य ज्वलालन्तमाहवनीयमुद्धृत्य आज्यं विलोप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा समिद्धत्याहवनीये पूर्णाहुतिं जुहोत्यों स्वाहेत्येतद्ब्रह्मान्वाधानमिति विज्ञायते ।।

अथ सायं हुतेऽग्निहोत्र उत्तरेण गार्हपत्यं तृणानि संस्तीर्य तेषु द्वंद्वशो न्यञ्चि पात्राणि साध(द)यित्या दक्षिणेनाऽऽहवनीये ब्रह्मायतने दर्भान्संस्तीर्य कृष्णाजिनं चान्तर्धायैतां रात्रिं जागर्ति य एवं विद्वान् ब्रह्मरात्रिमुपोष्य ब्राह्मणोऽग्नीन्समारोप्य वा प्रमीयते स समस्तं पाप्मानं तरति तरति ब्रह्महत्याम् ।

अथ ब्राह्मे मुहूर्त उत्थाय काल्प (कल्य) एव प्रातरग्निहोत्रं जुहोत्यथ पृथ्व्यां स्तीर्त्वाऽपः प्रणीय वैश्वानरं द्वादशकपालं निर्वपति सा प्रसिद्धेष्टिः संतिष्ठते ।।

आहवनीयेऽग्निहोत्रद्रव्याणि प्रक्षिपति अमृन्मयान्यथाऽऽत्मन्यग्नीन् समारोपयति । या ते अग्ने यज्ञिया तनूरिति त्रिस्त्रिरेकैकमवजिघ्रत्यथा अन्तर्वेदितिष्ठन्नों भूर्भुवःस्वः संन्यस्तं मयेति त्रिर्निरूप्योपांशूक्का त्रिरुच्चैः, त्रिषत्या हि देवा इति विज्ञायते । अभयं सर्वभूतेभ्यो मत्त इति चापां पूर्णाञ्जलिं निनयति ।।

**अथाप्युदाहरन्ति —**

अभयं सर्वभूतेभ्यो दत्त्वा यच्चरते मुनि : ।
न तस्य सर्वभूतेभ्यो भयं वाऽपीह विद्यत इति ।।

स वाचं यमोऽभिप्रव्रजाति । यष्टयः शिक्यं जलपवित्रकं कमण्डलुं पात्रमित्येतत्समादाय यत्राऽऽपस्तत्र गत्वा स्नात्वाऽप आचमस्य सुरभिमत्याऽब्लिङ्गाभिर्हिरण्यवर्णाभिः पावमानीभिर्मार्जयित्वा अन्तर्जलगतोऽघमर्षणेन षोडश प्राणायामान्धारयित्वोत्तीर्य वासः पीडयित्वा अन्यत्प्रयतो वासः परिधायाप आचम्य, ओं भूर्भुवः स्वरिति पवित्रमादाय तर्पयाम्यों भूस्तर्पयाम्यों भुवस्तर्पयाम्यों स्वस्तर्पयाम्यों भूर्भुवः स्वर्महर्नम इति देवान् । पितृभ्योऽञ्जलिमादाय तर्पयामि । ॐ भूः त्वधा । ॐ भुवः स्वधा । ॐ स्वः स्वधा । ॐ भूर्भुवः स्वर्महर्नम इति ।

अथोदुत्यं चित्रमिति द्वाभ्यामादित्यमुपतिष्ठते ।

ओमिति ब्रह्मोमिति ब्राह्मं वा । एष ज्योतिर्य एष तपति, एष वेदो(देवो) य एष तपति वेद्यमेतद्य एष तपति, एषमेवैष आत्मा तर्पयत्यात्मने नमः करोत्यात्मा ब्रह्मात्मा ज्योतिः

। ॐ सावित्र्रीं तर्पयामि । ॐ भूस्तर्पयामि । ॐ भुवस्तर्पयामि । ॐ स्वस्तर्पयामि । ॐ भूर्भुवः स्वस्तर्पयामि । सहस्रकृत्व आवर्तयेत् । शतकृत्वोऽपरिमितकृत्वो वा । ॐ भूर्भुवः स्वरिति पवित्रमादायोपगृह्णाति ।

न चात ऊर्ध्वमनुद्धृताभिरपरिस्रुताभिरपरिपूताभिर्वार्भिराचामेन्न चात

ऊर्ध्वं शुक्लवासोऽभिधारयेत् । एकदण्डी त्रिदण्डी वा । अथेमानि व्रतानि भवन्त्यहिंसा सत्यमस्तैन्यं मैथुनस्य च वर्जनं त्याग इत्येव पञ्चैवोपव्रतानि भवन्ति, अक्रोधो गुरुशुश्रूषा प्रसादः शौचमहारशुद्धिश्च'' इति ॥

**वायुपुराणे —**

एवं वनाश्रमे तिष्ठंस्तपसा दग्धकिल्बिषः ।
चतुर्थमाश्रमं गच्छेत्संन्यस्य विधिना द्विजः ॥
दद्याद्द्विजेभ्यो देवेभ्यः स्वपितृभ्यश्च यत्नतः ।
दत्त्वा श्राद्धमृषिभ्यश्च मनुजेभ्यस्तथाऽऽत्मनः ॥
इष्टिं वैश्वानरीं कृत्वा प्राजापत्यमथापि वा ।
अग्नींश्चाऽऽत्मनि संस्थाप्य मन्त्रवत्प्रव्रजेत्ततः ।
ततः प्रभृति पुत्राद्यैः स्नेहलोभादि वर्जयेत् ॥
दद्याच्च भूमावुदकं सर्वभूताभयंकरम् ।
दण्डं च वैणवं सौम्यं सत्वचं समपर्वकम् ।
वेष्टितं कृष्णमेखलरज्जवा चतुरङ्गुलम् ॥
ग्रन्थिभिश्च त्रिभिर्युक्तं जलपूतेन चोपरि ।
गृह्णीयाद्दक्षिणे हस्ते मन्त्रेणैव तु धर्मवित् ॥
क्षौमं वा कुशसूत्रं वा सूत्रं कार्पासिकं तु वा ।
तैरेव ग्रथितं श(शि)क्यं पद्माकारसमन्वितम् ॥
षड्भिर्वा पर्वभिर्युक्तं मुष्टिभिः शिक्यलक्षणम् ।
गृह्णीयान्मन्त्रतो विद्वान्पात्रं चापि कमण्डलुम् ॥
आसनं दारुजं प्रोक्तं समाश्रं वर्तुलं समम् ।
शौचार्थमासनार्थं वा मुनिसिस्तैरनुष्ठितम् ॥
कौपीनाच्छादनं वासः कन्थां शीतनिवारिणीम् ।

पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहम् ।।
एतानि तस्य लिङ्गानि यतेः प्रोक्तानि धर्मतः ।
संगृह्य कृतसंन्यासो गत्वा तीर्थमनुत्तमम् ।।
स्नात्वाऽथाऽऽचम्य विधिवज्जलपूतांशुकेन वै ।
वारिणा तर्पयित्वा तु मन्त्रवद्भास्करं नमेत् ।।
आसीनः प्राङ्मुखो मौनी प्राणायामत्रयं चरेत् ।
गायत्रीं च यथाशक्ति जप्त्वा ध्यायेत्परं पदम् ।।
वनेषु तु विगृह्यैवं तृतीयं भागमायुषः ।
चतुर्थमायुषो भागं त्यक्त्वा सङ्गं परित्यजेत् ।।
आश्रमादाश्रमं गच्छेद्धुतहोमो जितेन्द्रियः ।
भिक्षाबलिपरिश्रान्तः प्रव्रजन्प्रेत्य वर्धते ।।
ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानः पतत्यधः ।।
अधीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्य धर्मतः ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ।।
अनधीत्य द्विजो वेदाननुत्पाद्य तथाऽऽत्मजान् ।
अनिष्ट्वा च तथा यज्ञैर्मोक्षमिच्छन्व्रजत्यधः'' ।।

एतच्च प्रव्रज्याया गार्हस्थ्यपूर्वकत्वपक्षे द्रष्टव्यम् । यस्तु ब्रह्मचर्य एव विरक्तो न तस्य दारपरिग्रहः, स्त्रीरागप्रयुक्तत्वात्तस्य ।।

अदारस्य च प्रजोत्पत्तीज्ययोरनधिकारोऽनधिकृतस्य चानन्-ुष्ठानेऽपि न प्रत्यवायः । ततश्च ब्रह्मचारिणः प्रव्रजतोः धीतवेदत्वमेव प्रव्रज्याधिकारो हेतुः । न प्रजादिसंपत्तिः । न च ''जायमानो ह वै ब्राह्मणः' इत्यादिवचनबलादुत्पत्तिमात्रविशिष्टस्यैवाध्ययनप्रजेज्यात्म-

कर्णापाकरणेऽधिकार इति वाच्यम् । असमर्थत्वात् । न ह्युत्पन्न एव शक्नोत्येतत् कर्तुं, तस्मादधिकारी जायमानो ब्राह्मणादिस्त्रिभिः ऋणवाञ्जायत इति वाक्यार्थः । ततश्च ब्रह्मचर्यमात्रपूर्विकायां प्रवज्यायां न कश्चिद्विरोधः ।।

ननु सप्तत्या ऊर्ध्वं संन्यसेदिति विरुध्यते, मैवम् । रागात् गार्हस्थ्यपरिग्रहस्य हि मन्दवैराग्यस्य स्मृत्यैप काल आहार्यं वैराग्यं प्रति विधीयते । अन्यथा 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुति-विरोधो दुष्परिहारः स्यात् । तथा च नृसिंहपुराणम्-

"यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरं शिरैः ।
संन्यसेदकुतोद्वाहो ब्राह्मणो भैक्षचर्यवान् ।।
अगारादभिनिष्क्रान्तः पवित्रोपचितो मुनिः ।
समुपोढेषु कामेषु निरपेक्षः परिव्रजेत् ।।
रागादिविषयासङ्गपुत्रदारशुभाशुभम् ।
लोकयत्राभयं चैव त्यक्तं संन्यास उच्यते" ।।

तथा -

"वैश्मदारसुतक्षेत्रं संन्यस्तं येन दुःखदम् ।
वैराग्यज्ञानपूर्वं वै लोकेऽस्मिन्नास्ति तत्समः" ।।

माहाभारते -

"चतुर्विधा भिक्षवस्तु कुटीचरबहूदकौ ।
हंसः परमहंसश्च यो यः पश्चात्स उत्तमः" ।। ५६।।

परिव्रज्य किं कुर्यादित्यत आह -

**सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ।**

**पितृंयाणोऽजवीथ्याश्च यदगस्त्यस्य चान्तरम् ।**
**तेनाग्निहोत्रिणो यान्ति स्वर्गकामा दिवं प्रति ।।१८४।।**

अजवीथीमाह गर्गः–

"हस्तश्चित्रा विशाखिका अजवीथी" इति ।

कश्यपस्तु श्रवणादिनक्षत्रत्रयमजवीथीमाह – "अजवीथी विष्णुमाद्या" इति । तस्याश्चागस्त्यस्य यदन्तरं स पितृयानसंज्ञको मार्गः । तेन काम्यकर्मकारिणो दिवं स्वर्ग यान्ति । अग्निहोत्रग्रहणं वैतानिककर्मप्रदर्शनार्थम् । दुःखसंभिन्नचिरकालोपभोग्य-सुखा-नुभवास्पदीभूतो देशविशेषो द्यौः ।।१८४।।

किञ्च –

**ये च दानपराः सम्यगष्टाभिश्च गुणैर्युताः ।**
**तेऽपि तेनेव (मार्गेण) सत्यव्रतपरायणाः ।।१८५।।**

ये च सम्यग्दानादिपूर्तधर्मनिरतास्तथा दया सर्वेषु भूतेषु, क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेत्यष्टाभिरात्म-गुणैर्युक्ताः । ये च नियमेन सत्यवादिनस्तेऽपि पितृयानेनैव मार्गेण दिवं यान्ति ।।१८५।।

तन्मार्गगामिनां पुनरावृत्तिमितिहासमुखेनाऽऽह –

**अष्टाशीतिसहस्राणि मुनयो गृहमेधिनः ।**
**पुनरावृत्ति(वर्ति)नो वीजभूता धर्मप्रवर्तकाः ।।१८६।।**

अष्टाशीतिसहस्रसंख्या मुनयस्तापसाः । इष्टापूर्तधर्मकारिण इति

यावत् । गृहमेधिनो गृहस्थाः । अनेन चाकाम्यकर्मकारित्वं सूचयति । पुनरावर्तिनः पुनर्जन्मभाजः । जगत्सृष्टेर्धर्मप्रभावायास्ते प्रागनुष्ठित-धर्मत्वाद्बीजभूताः । प्रवृत्याख्यस्य धर्मस्य च प्रवर्तकाः ।।१८६।।

**सप्तर्षिनागवीथ्यन्तर्देवलोकसमाश्रिताः ।**
**तावन्त एव मुनयः सर्वारम्भविवर्जिताः ।।१८७।।**

**तपसा ब्रह्मचर्य्येण सङ्गत्यागेन मेधया ।**
**तत्रैव तावत्तिष्ठन्ति यावदाभूतसंप्लवम् ।।१८८।।**

नागवीथीमाह गर्गः–

"कृतिका भरणी स्वातिर्नागवीथी प्रकीर्तिता" इति ।

देवलस्तु –

"अश्विन्यादित्रिभाः सर्वा नागाद्या दहनान्तिकाः" ।

अयमर्थः– प्रतयेकमश्विन्यादित्रिनक्षत्रा नागाद्या नव वीथयः । नागा गजा ऐरावती ऋषभा गौर्जरद्गवी मृगी अजा दहनेति । तस्या नागवीथ्याः सप्तर्षिणां च यदन्तरालं तेन मार्गेण गत्वाऽष्टाशीतिसहस्राण्येव मुनयः सकलनिषिद्धकमायकर्मारम्भनिवृत्तास्तपसाऽऽवश्यकेन वर्णधर्मेण तथा ब्रह्मचर्येण सङ्गत्यागेन धर्मानुष्ठानिमित्तख्यातिलाभपूजापरित्यागेन मेधया मेधाकार्येण वेदधारणेन युक्ता देवलोकं समाश्रित्य तत्र यावदाभूत-संप्लवं महाप्रलयं यावदवतिष्ठन्ते । तेऽपि पूर्ववत्पुनरावर्तितो बीजभूता निवृत्तधर्मप्रवर्तकाश्च ।।१८७।।१८८।।

एवं श्लोकद्वयेनाऽऽत्मज्ञानरहितं काम्यं कर्माऽऽवश्यकं वा कुर्वतां

पुनरावृत्तिरुक्ता । "स ह्याश्रमैर्विजिज्ञास्यः" इत्यादौ त्वात्म ज्ञानसहितस्य कर्मणोऽना वृत्तिफलत्वं वक्ष्यति ह। तत्राधुना तावज्ज्ञातव्यमात्मानं तज्ज्ञानोपायं च श्लोकद्वयेनाऽऽह –

**यवो वेदाः पुराणश्च विद्योपनिषदस्तथा ।**
**श्लोकाः सूत्राणि भाष्याणि यच्च किञ्चन वाङ्मयम्।।१८९।।**

**वेदानुवचनं यज्ञो ब्रह्मचर्य्यं तपो दमः ।**
**श्राद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः ।।१९०।।**

द्विधा ह्यात्मा व्यवस्थितो बन्धवर्तितया तद्रहिततया च । तस्य यन्मुक्तस्वभावं रूपं तत्सर्वेश्वरत्वसर्वज्ञात्वादिगुणयोगित्वेन वेदान्तैरुपास्यतयोच्यते, न पुनर्यद्बद्धस्वभावम् । प्रकाशते हि स्वत एव तत्सर्वेषां हृदयेषु तत्प्रकाशाधीनो विश्वप्रकाशः ।।

"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति ।

तत्र शास्त्रेण यदुपास्यातयोक्तं तदुपलक्षयितुमिदमुच्यते – यदो वेदा इत्यादि । यतो जगत्कारणाद्वेदाः श्रुतयः, पुराणानि प्रसिद्धानि । अन्याश्च धर्मशास्त्राद्या उपनिषदो ब्रह्मावबोधका वेदभागाः । तासाममृतीभावहेतुविज्ञानविधशयकत्वात्प्राधान्येन वेदत्वे सत्यपि पृथग्ग्रहणम् । ये च केचन श्लोकाः–

"यदक्षरं पञ्चविधं समेति" इत्येवमादयः । सूत्राणि विवक्षितार्थवाचकानि वाक्यानि । भाष्याणि सूत्रादीनां विवरणानि । अन्यदपि वाङ्मयं यत उद्भूतं तस्य परमात्मनो वेदानुवचनादयो ज्ञानहेतवः

। वेदानुवचनं वेदाध्ययनं, गुरुवचनमनु पश्चाद्वचनमनुवचनम् । अनेन च सर्वस्य वेदाध्ययनस्य गुर्वध्ययनपूर्वकत्वं वदन्वेदस्यापौरुषेत्यवं गमयति । यत्तु परामात्मसकाशाद्वेदानामुदय इत्युक्तं न तेन वेदानां पौरुषेयतापत्तिः । प्रमाणान्तरेण हि वाक्यार्थं निश्चित्य तत्प्रतिपादनायेदं प्रथमतया वाक्यस्योत्पादित्वं पौरुषेयत्वम् । अत एव बृहदारण्यके निःश्वसित-तुल्यत्वमुक्तम् –

''स यथाऽऽर्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं
वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो
यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या
उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्या-
नान्यस्यैवैतानि निःश्वसितानि'' इति ।

ब्रह्मचर्यं ब्रह्मचारिकर्म । श्रद्धा भक्तिरास्तिक्यं वा । उपवासो गुरूषास्तिः । स्वातन्त्र्यं वश्येन्द्रियता । प्रसिद्धमन्यत् ।।१८९।।१९०।।

पूर्वश्लोके ये निर्दिष्टा वेदानुवचनादयोऽर्थास्त एव ब्रह्मज्ञानस्वरूपमात्रोत्पादकतया विनियुक्ता इति भ्रान्तिनिरासायाऽऽह

**स ह्याश्रमै(निदिध्यास्यः)र्विजिज्ञास्यः समस्तैरेवमेव तु ।**
**द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः ।।१९१।।**

स खलु परमात्मा समस्तैश्चतुर्भिरप्याश्रमैर्विजिज्ञास्यो विशेषतो ज्ञातुमेष्टव्यः । अत्र परमात्मविषयविज्ञानस्याऽऽश्रमान्प्रति साध्यता प्रत्येतव्या, इष्यमाणत्वात् । न पुनस्तद्विषयेच्छाया इष्यमाणत्वं प्रति गुणत्वात् । प्रधानं च पदार्थान्तरेण संबध्यते न गुणः । न च

प्रत्ययार्थत्वेनेच्छायाः प्राधान्यं वाच्यम् । स हि सन्प्रत्ययेन धात्वर्थमीप्सिततमं प्रति गुणत्वेनैवोच्यते, तेन प्रत्ययार्थत्वेऽपि तस्या गुणभाव एव प्रयोजनवानेव च धात्वर्थ इष्यते, न सुखावाप्तिवत्स्वरूपेण । तेन "ब्रह्म वेद ब्रह्म भवति । (★न च (स) पुनरावर्तते" इत्यादिवचनावगतौ(ता) पुनरावृत्तिप्रयोजनं विज्ञानमाश्रमाणां साध्यमित्युक्तं भवति)। ब्रह्मज्ञानस्य सप्रयोजन्तवादेव तद्विषयेच्छासिद्धेर्नेच्छाया विधेयता । अप्राप्तविषयत्वाद्विधेः । किं पुनस्तज्ज्ञानं वेदितव्यमित्यपेक्षित उक्तं – द्रष्टव्य इति । द्रष्टव्यः साक्षात्कर्तव्य इत्यर्थः । दर्शनोपायतयोक्तं – मन्तव्य इति । श्रुतस्य युक्तिभिरनुसंधानं मननम् । तच्च श्रवणमन्तरेण न संभवतीति मत्वोक्तं – श्रोतव्य इति । उपनिषद्वाक्येभ्योऽवधारणीयः । द्विजातिभिरिति शूद्रव्युदासाथम् ।।१९१।।

विहितयोर्ज्ञानकर्मणोः फलमाह –

**य एवमेनं विन्दन्ति ये चारण्यकमाश्रिताः ।**<br>
**उपासते द्विजाः सत्यं श्रद्धया परया युताः ।।१९२।।**

**क्रमात्ते सम्भवन्त्यर्च्चिरहः शुक्लं तथोत्तरम् ।**<br>
**अयनं देवलोकश्च सवितारं सवैद्युतम ।।१९३।।**

**ततस्तान् पुरुषोऽभ्येत्य मानसो ब्रह्मलौकिकान् ।**<br>
**करोति पुनरावृत्तिस्तेषामिह न विद्यते ।।१९४।।**

ये द्विजातय एनं परमात्मानमेवं श्रवणमननाभ्यां विन्दन्ति लभन्ते ब्रह्माहमस्मीति साक्षात्कुर्वन्ति, ये चाऽऽरण्यकमारण्याध्येतव्यं

ब्रह्मविद्यात्मकं वेदभागं ब्रह्मप्रामणतया समाश्रिताः सन्तः परमया भक्त्योपेताः सत्यं यथार्थभूतं परमेश्वरमुपासत्ते ध्यायन्ति । अत्र ये चेत्युपासकत्वेन श्रवणमननं(न)कर्तृत्वेन समुच्चायर्थश्चकारो न पुरुषव्यक्तिसमुच्चयार्थः । तेन श्रवणमननध्यानर्चनवन्तो देहादुत्क्रम्य वक्ष्यमाणार्चिराद्यभिमानिनीर्देवताः संभवन्ति प्राप्नुवन्ति । अर्चिरग्निः । अहः दिवसः । शुक्ल शुक्लपक्षः । उत्तरमयनं सूर्यस्योदगयनम् । देवलोकसवितृवैद्युताः प्रसिद्धाः । ततो वैद्युताग्निं प्राप्तांस्तान्मानवः पुरुषोऽभ्येति । ततोऽसौ ब्रह्मलौकिकान्ब्रह्मलोकनिवासिनस्तान्करोति । ब्रह्मलोकं प्राप्तानां न पुनरावृत्तिर्जन्म न विद्यते ।।१९२।।१९३।।१९४।।

काम्यकर्मकारिणः प्रत्याह –

**यज्ञेन तपसा दानैर्ये हि स्वर्गजितो नराः ।**
**धूमं निशां कृष्णपक्षं दक्षिणायनमेव च ।।१९५।।**

**पितृलोकं चन्द्रमसं वायुं (नभो)वृष्टिं जलं महीम् ।**
**कमात्ते सम्भवन्तीह पुनरेव व्रजन्ति च ।।१९६।।**

फलार्थं विहितैर्यज्ञातपोदानादिभिर्ये स्वर्गं जितवन्तः स्वर्गप्रदं धर्मं कृतवन्तस्ते वक्ष्यमाणक्रमेण धूमादीन्संभवन्ति । धूमाद्यभिमानिनीर्देवताः प्राप्नुवन्ति । तत्र चन्द्रं यावदारोहणं वाय्वाद्यवरोहणं महीं पृथ्वीं तत्रत्यानोषधिबनस्पतीन्संभवन्तीत्यर्थः । तत ओषधिवनस्पतीन्भुक्तवतोः स्त्रीपुरुषयोर्विशुद्धे शुक्रशोणिते पञ्च धातूनित्यादि पूर्वोक्तमनुसंधेयम् । न पुनर्यज्ञाद्यनुष्ठाय देहपातादूर्ध्वमुक्तक्रमेण यान्त्यायान्ति च । अत एवोक्तं भगवता –''गतागतं कामकामा लभन्ते''गीतासु ।।१९५।।१९६।।

विशेषमाह –

**एतद् यो न विजानाति मार्गद्वितयमात्मवान् ।**
**दन्दशूकः पतङ्गो वा भवेत् कीटोऽथवा कृमिः ।।१९७।।**

उक्तमात्मनो मार्गद्वयं यो न विजानाति ज्ञात्वा च तन्मार्गगमनोपायं नानुतिष्ठति, स दन्दशूकः सर्पः पतङ्ग पक्षी कृमिः कीटो वा भवेत् ।।१९७।।

उपासनेतिकर्तव्यतामाह –

**ऊरुस्थोत्तानचरणः सव्ये न्यस्येतरं करम् ।**
**उत्तानं किञ्चिदुन्नम्य मुखं विष्टभ्य चोरसा ।।१९८।।**

**निमीलिताक्षः सत्वस्थो दन्तर्दन्तानसंस्पृशन् ।**
**तालुस्थ चलजिह्वश्च संवृतास्य सुनिश्चलः ।।१९९।।**

**सन्निरुध्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः ।**
**द्विगुणं त्रिगुणं वाऽपि प्राणायाममुपक्रमेत् ।।२००।।**

**ततो ध्येयः स्थितो योऽसौ हृदये दीपवत् प्रभुः ।**
**धारयेत्तत्र चात्मानं धारणां धारयन् बुधः ।।२०१।।**

अनतिनीचोच्छ्रित आसन उपविश्योत्तानौ चरणौ स्थापयित्वा पद्मासनं बद्ध्वेति यावत् । तदुपरि सव्ये करे दक्षिणं करमुत्तानं निधायाऽऽस्यं किञ्चिदुन्नम्य वक्षसा च कायं विष्टभ्याक्षिणी निमील्य रागद्वेषादि-रजस्तमःकार्यविरोधि सत्त्वकार्यं मनःप्रसादादिकामस्थाय दन्दपङ्क्त्योरन्योन्यसंस्पर्शं परिहरंस्तालुनि जिह्वामचलां कृत्वा निष्कम्पः

सन्विषयेभ्य इन्द्रियाणि प्रत्याहृत्य द्वादशमात्रिकात्कनीयसः प्राणायामाद्विगुणं त्रिगुणं वा प्राणायामं कुर्यात् । ततो हृव्द्योम्नि हितसंज्ञकनाडीसंभेदलक्षणे दीपवदवस्थित आत्मा सर्वेश्वरो ध्येयश्चिन्तनीयः । ध्यानान्तरं धारणां कुर्वंस्तत्राऽऽत्मन्यात्मानमात्मीयं मनो धारयेन्नियच्छेत् । दत्तात्रेयः–

निवाते विजने स्थाने शुभे चैव मनोरमे ।
निर्जन्तुके निराबाधे शर्करावालुकादिभिः ।।
शब्दादिवामिंते स्थाने शुभं कृत्वा तु संस्तरम् ।
बद्ध्वा सुखासनं तत्र प्राङ्मुखो वाऽप्युदङ्मुखः ।।
कृत्वा सुसंनतं देहं सुसमं योगवित्तमः ।
नमस्कृत्य महादेवं महायोगीश्वरं हरिम् ।।
शोधयित्वा पुरा नाडीः प्राणायामांश्चरेत्ततः ।
प्राणायामांश्चरेत्तावद्यावच्चितं प्रसीदति'' ।।

महाभारते –

''यमनियम्(मासन) प्राणायामप्रत्याहारधारणा-
ध्यानसमाधयोऽष्टावङ्गानि योगस्य'' ।।

ब्रह्मपुराणे –

''ब्रह्मचर्यसहिंसा च सत्यास्तेयापरिग्रहान् ।
सेवेत योगी निष्कामो योग्यतां स्वमनो नयन् ।।
स्वाध्यायशौचसंतोषतपांसि नियतात्मवान् ।
कुर्वीत ब्रह्मणि तथा परस्मिन्प्रवणं मनः ।।
एते यमाश्च नियमाः पञ्च पञ्च प्रकीर्तिताः ।
विशिष्टफलदाः काम्या निष्कामानां विमुक्तिदाः ।।

एकं भद्रासनादीनां समास्थाय गुणैर्युतः ।
यमाख्यैर्नियमाख्यैश्च युञ्जीत नियतो मुनिः'' ।।

वायुपुराणे –

''पद्ममर्धानसं वाऽपि तथा स्वस्तिकमासनम् ।
आस्थाय योगी युञ्जीत कृत्वा तु प्रणवं हृदि'' ।।

मार्कण्डेयपुराणे –

''प्राणापाननिरोधश्च प्राणायाम उदाहृतः'' ।।

विष्णुपुराणे –

''प्राणाख्यमनिलं वश्यमभ्यासात्क्रिय(त्कुरु)ते हि यः ।
प्राणायामः स विज्ञेयः सबीजोऽबीज एव च'' ।।

सबीजः समन्त्रकः । अबीज इतरः ।

मार्कण्डेयपुराणे –

''लघुमध्योत्तरीयख्यः प्राणायामस्त्रिघोदितः ।
तस्य प्रमाणं वक्ष्यामि तदलर्क शृणुष्व मे ।।
लघुर्द्वादशमात्रस्तु द्विगुणः स तु मध्यमः ।
त्रिगुणाभिस्तु मात्राभिरुत्तमः स उदाहृतः ।।
निमेषोन्मेषणे भात्रा तालो लध्वक्षरस्तथा'' ।।

योगयाज्ञवल्क्यः –

''अङ्गुलिमोक्षत्रितयं जान्वोः परिमार्जनं वाऽपि ।
तालत्रयमपि तज्ज्ञा मात्रसंज्ञं प्रशंसन्ति'' ।।

देवलः–

''त्रिविधः प्राणायामः कुम्भो रेचनं पूरणमिति ।

निःश्वासनिरोधः कुम्भः । अनस्रानिःश्वासो रेचनम् ।
निःश्वासाध्यमानं पूरणमिति । स पुनरेकद्वित्रिभिरुद्धा-
तैर्मृद्वंस(दुर्म)न्दस्तीक्ष्णो वा भवति । प्राणापानव्यानोदान -
समानानां सकृदुद्गमनं(म्य) मूर्धानमाहत्य निवृत्तिरुद्धातः''
।।

मार्कण्डेयपुराणे –

''प्रथमेन जयेत्स्वेदं द्वितीयेन तु वेपथुम् ।
विषादं तु तृतीयेन जयेद्दाषमनुक्रमात् ।।
मृदुत्वे सेवमानस्थ सिंहाार्दुलकुञ्जराः ।
यथा यान्ति तथा प्राणो वश्यो भवति योगिनः ।।
वश्यं सन्तं यथेच्छातो नागं वहति हस्तिपः ।
तथैव योगी छन्देन प्राणं नयति साधितम् ।।
यथा हि साधितः सिंहो मृगान्हन्ति न मानवान्।
तद्वन्निषिद्धः पवनः किल्बिषं न नृणां तनुम् ।।
तस्माद्युक्तः सदा योगी प्राणायामपरो भवेत् ।
इत्थं योगी यताहारः प्राणायामपरायणः ।।
जितां जितां शनैर्भूमिमा(रो)हेत्तु यथा गृहम् ।
दोषान्व्याधिं तथा मोहमाक्रान्ता भूरनिजिता ।।
विवर्धयति नाऽऽरोहेत्तस्माद्भूमिमनिर्जिताम् ।
प्राङ्नाभ्यां हृदये चाथ तृतीया च तथोरसि ।।
कण्ठे मुखे नासिकाग्रे नेत्रभ्रूमध्यमूर्धसु ।
किञ्चित्तस्मात्परस्मिंश्च धारणा परमा स्मृता ।।
दशैता धारणाः प्राप्य प्राप्नोत्यक्षरसात्म्यताम् ।
नाऽऽध्मातः क्षुधितः श्रान्तो न च व्याकुलचेतनः ।।

युञ्जीत योगं राजेन्द्र योगी सिध्यर्थमादृतः ।
नातिशीते न चैवोष्णे द्वंद्वे नाम्ब्वनिलात्मके ।।
कालेष्वेतेषु युञ्जीत न योगं ध्यानत्परः ।
सशब्देऽग्निजलाभ्याशे जीर्णगोष्ठे चतुष्पथे ।।
शुष्कपर्णचये नद्यां श्मशाने ससरीसृषे ।
सभये कूपतीरे वा चैत्यवल्मीकसंचये ।।
देशेष्वेतेषु तत्त्वज्ञो योगाम्यासं विवर्जयेत् ।
सत्त्वस्यानुपपत्तौ च देशकालविवर्जिते ।।
न सतो दर्शनं यागं तस्मात्तत्परिवर्जयेत् ।
दोषानेताननादृत्य मूढत्वाद्यो युनक्ति वै ।।
विघ्नाय तस्य ये दोषा जायन्ते तान्निबोध मे ।
बाधिर्यं जडता लोपः स्मृतेर्मूकत्वमन्धता ।।
ज्वरश्च जायते सद्यस्तद्वदज्ञायोगिनः ।
प्रमादाद्योगिनो दोषा यद्येते स्युश्चिकित्सितम् ।।
तेषां नाशाय कर्तव्यं योगिनस्तन्निबोध मे ।
स्निग्धां यवागूमत्युष्णां भुक्त्वा तत्रैव धारयेत् ।।
वातगुल्मप्रशान्त्यर्थं गुल्मावर्ते तथा दधि ।
यवागूं वाऽपि पवनं वायुग्रन्थीन्प्रति क्षिपेत् ।।
तद्वत्कम्पो(म्पे) महाशैलं स्थितं मनसि धारयेत् ।
विघाते वचसो वाचि बाधिर्ये श्रवणेन्द्रिये ।।
तथैवाऽऽम्लफलं ध्यायेत्तृषार्ते रसनेन्द्रिये ।
यस्मिन्यस्मिन्रुजा देशे तस्मिंस्तदुपकारिणीम् ।।
धारयेद्धारणामुष्णे शीतां शीते विदाहिनीम् ।
कीलं शिसि संस्ताप्य काष्ठं काष्ठेन ताडयेत् ।।

लुप्तस्मृतेः स्मृतिः सद्यो योगिनस्तेन जायते ।
यावत्पृथिव्यां वाय्वग्नी व्यापिनावपि धारयेत् ।।
अमानुषात्सत्त्वजाताद्बाधा स्याच्चेच्चिकित्सयेत् ।
अमानुषं सत्त्वमन्तर्योगिनं(नः) प्रविशेद्यदि ।।
वाय्वग्निधारणादेनं देहसंस्थं विनिर्दहेत् ।
एवं सर्वात्मना कार्या रक्षा योगविदा नृप ।।
धर्मार्थकामोक्षाणां शरीरं साधनं यतः ।
प्राणायामा दश द्वौ च धारणा साऽभिधीयते ।।
द्वे धारणे स्मृते योगे योगिभिस्तत्त्वदर्शिभिः ।
तथा वै योगयुक्तस्य योगिनो नियतात्मनः ।।
सर्वे दोषां प्रशश्यन्ति स्वस्थश्चैवोपजायते ।
ईक्षते च परं ब्रह्म प्राकृतांश्च गुणान्पृथक् ।।
व्योमादिपरमाणूंश्च तथाऽऽत्मानमकल्मषम्'' ।

तथा –

''शब्दादिभ्यो निवृत्तानि यदक्षाणि यतात्मभिः ।
प्रत्याह्रियन्ते योगेन प्रत्याहारस्ततः स्मृतः'' ।।

हारीतः–

''अणुत्वाल्लाघवाच्चापलाद्वायोर्योगभ्रष्टस्य मनसः समानीयार्थे योजनं प्रत्याहारः'' ।

विष्णुपुराणे –

''शब्दादिष्वनुरक्तानि सम्यगक्षाणि योगवित् ।
कुर्याच्चित्तानुकारीणि प्रत्याहारः स उच्यते ।।
वश्यता परमा तेषां जायतेऽतिबलात्मनाम् ।

इन्द्रियाणामवश्यैस्तैर्न योगी योगसाधनः'' ।।

देवल :–

''शरीरेन्द्रियमनोबुध्यात्मनां धारणाद्धारणा'' ।

अत्राऽऽत्समाऽङ्कारः ।

शङ्ख:–

''मनःसंयमनात्तज्ज्ञैर्धारणेति निगद्यते'' ।

मार्कण्डेपुराणे –

''योगयुक्तः सदा योगी लघ्वाहारो जितेन्द्रियः ।
सूक्ष्मास्तु धारणाः सप्त भूराद्या मूर्ध्नि धारयेत् ।।
धरित्रीं धायन्योगी गन्धसौक्ष्म्यं प्रपद्यते ।
आत्मानं मन्यते पृथ्वीं तद्गन्धं च जहाति सः ।।
तथैवाप्सु रसं सूक्ष्मं तद्वद्रूपं च तेजसि ।
स्पर्शं वायौ तथा तद्वद्बिभ्रतस्तस्य धारणाम् ।।
व्योम्नः सूक्ष्मप्रवृत्त्य शब्दं तद्वज्जहाति सः ।
मनसा सर्वभूतानां मन आविशते यदा ।।
मानसीं धारणां बिभ्रन्मनःसौक्ष्म्यं जहाति च ।
तद्वद्बुद्धिमशेषाणां सत्त्वानामेत्य योगवित् ।।
परित्यजति संप्राप्य बुद्धिसौक्ष्म्यमनुत्तमम् ।
एतासां धारणानां तु सप्तानां सौक्ष्म्यमाप्तवान् ।।
दृष्ट्वा दृष्ट्वा ततः सिद्धिं त्यकत्वा त्यक्त्वा परां भजेत् ।
एतान्येव च संधाय सप्त सूक्षमाणि पार्थिव ।।
भूरादीनां विरागोऽत्र सद्भावज्ञस्य मुक्तये'' ।

विष्णुपुराणे –

"प्राणायामेन पवनैः प्रत्याहारेण चेन्द्रियैः ।
वशीकृतं ततः कुर्यात्स्थितं चेतः शुभाश्रये ।।
तद्रूपप्रत्ययायैकसंततिः साऽन्यनिःस्पृहा ।
तध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप" ।।

अयमर्थः– ब्रह्मरूपप्रत्ययात्मिका संततिः प्रवाहः, सा विषयान्तरासंस्पृष्टा सति ध्यानमित्युच्यत इति ।

तथा –

तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् ।
मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते" ।।

तस्य ब्रह्मणः कल्पनाहीनं ध्येयं ध्यानं ध्यातेतिभेदप्रत्ययरहितं ध्यानजनितसंस्कारसहितेन मनसा निर्विकल्पकमहं ब्रह्मास्मीति प्रत्यक्षसमाधिः । ध्रियमाणशरीरस्य ब्रह्मसाक्षात्कारोऽपि मानस इत्यभिप्रायेण मनसेत्युक्तम् । मुक्तावेव स्वयंप्रकाशो ब्रह्मीभावः । शरीरपातोत्तरकाला च मुक्तिरित्यतो वाक्याद्गम्यते ।

विष्णुः–

"ऊरस्थोत्तानचरणः सव्ये करे करं न्यस्य तालुस्थाचलजिह्वो दन्तैर्दन्तानसंस्पृशन्स्वं नासाग्रं पश्यन्दिशस्त्वनलोकयन्विभीः प्रशान्तात्मा चतुर्विंशत्यात्मतत्त्वैर्व्यतीतं चिन्तयेन्नित्यमतीन्द्रियमगुणं शब्दस्पर्शरसरूपगन्धातीतं सर्वस्थमतिस्थूलं सर्वगमतिसूक्ष्मं सर्वतःपाणिपादान्तं सर्वतोक्षिशिरोमुखं सर्वतःशक्तिमेवं ध्यायेत् । ध्याननिरतस्य संवत्सरेण योगाविर्भावो भवति । अथ निराकारे लक्ष्यबन्धं

कर्तुं न शक्नोति, तदा पृथिव्यप्तेजोवाय्वाकाशादिमना-बुद्ध्यात्माव्यक्तपुरुषाणां पूर्वं पूर्वं ध्यात्वा तत्र लब्धलक्ष्यस्तं परित्यजेदपरमपरं ध्यायेत् । एवं पुरुषो ध्यानमारोहेत् । तत्राप्यसमर्थो हृदयपद्मस्य मध्ये दीपवत्पुरुषं ध्यायेत् ।

एवं पुरुषध्यानमपोहेत् । तत्राप्यसमर्थो भगवन्तं वासुदेवं कुण्डलिनमङ्गदिनं वनमालाविभूषितोरस्कं स्वरूपं चतुर्भुजं शङ्खचक्र गदापद्मधरं चरणमध्यगतवसुधंध्यायेत् । यद्यध्यायति तत्तदाप्नोतीति ध्यानगुह्यम् । तस्मात्सर्वमेव क्षरं त्यक्त्वाऽक्षरमेव ध्यायेत् । न पुरुषं विना किञ्चिदप्यक्षरमस्ति तं प्राप्तय मुक्ता भवति'' ।

मनुः–

''पुरमाक्रम्य सकलं शेते यस्मान्महाप्रभुः ।
तस्मात्पुरुष इत्येव प्रोच्यते तत्त्वचिन्तकैः ।।
प्राग्रात्रपररात्रेषु योगी नित्यमतन्द्रितः ।
ध्यायते पुरुषं नित्यं निर्गुणं पञ्चविंशकम् ।।
एतद्वोऽभिहितं सर्वं निःश्रेयसकरं परम् ।
अस्मादप्रच्युतो विप्रः प्राप्नोति परमां गतिम् ।।
एवं स भगवान्देवो लोकानां हितकाम्यया ।
धर्मस्य परमं गुह्यं ममेदं सर्वमुक्तवान् ।।
सर्वमात्मनि संपश्येत्सच्चासच्च समाहितः ।
सर्वमात्मनि संपश्यन्नाधर्मे कुरुते मनः ।।
आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम् ।
आत्मा हि जनयत्वयेषां कर्मयोगं शरीरिणाम् ।।
खं संनिवेशयेत्खे तु चेष्टनस्पर्शनेऽनिलम् ।

पङ्क्तिदृष्ट्योः परं तेजः स्नेहोऽ(हेऽ)पो गां च मूर्तिषु ।।
मनसीन्द्रं दिशः श्रोत्रे क्रान्ते विष्णुं बले हरम् ।
वाच्यग्निं मित्रमुत्सर्गे प्रजने च प्रजापतिम् ।।
प्रशासितारमेतेषामणीयांसमणोरपि ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ।।
एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ।।
एष सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः ।
जन्मवृद्धिक्षये नित्यं संसारयति चक्रवत् ।।
य एवं सर्वभूतेषु पश्यत्यात्मानमात्मना ।
स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम्" ।।१९८।।
।।१९९।। २००।।२०१।।

योगसिद्धेर्लक्षणमाह –

**अन्तर्द्धानं स्मृतिः कान्तिर्दृष्टिः श्रोत्रज्ञता तथा ।**
**निजं शरीरमुत्सृज्य परकायप्रवेशनम् ।।२०२।।**

**अर्थानां छन्दतः सृष्टिर्योगसिद्धेस्तु लक्षणम् ।**
**सिद्धो योगे त्यजः देहममृतत्वाय कल्पते ।।२०३।।**

अन्तर्धानमदृश्यशरीरत्वम् । तच्चाणुपरिमाणत्वे तस्य भवति । तच्चाणिमाख्यगुणप्राप्त्या, स्मृतिर्जन्मान्तरानुभूतार्थविषया । कान्तिः कमनीयत्वं, दृष्टिरतीतानागतव्यवहितविप्रदृ(कृ)ष्टार्थे(र्थ)विषया । श्रोत्रज्ञता श्रोत्रेन्द्रियसाक्षात्कारित्वम् । अनेन चाऽऽत्मव्यतिरिक्ताव्यक्तबुद्ध्यहंकार-पञ्चतन्मात्रैकादशेन्द्रियपञ्चभूतानां साक्षात्कारित्वमुपलक्ष्यते । निजं स्वकीयं

शरीरं पूर्वकर्मारब्धमुत्सृज्य परकायं प्रविश्य तदन्तर्गततया तद्विषयोपभोक्तृत्वम् । अर्थानां पृथिव्यादीनां स्रष्टव्यानां स्वेच्छया स्वातन्त्र्येणोत्पादनमित्येतद्योगसिद्धेर्लक्षणं लिङ्गम् । एतच्च लक्षणमेव योगसिद्धेर्न प्रयोजनम् ।

प्रयोजनं त्वमृतीभाव एव, तदाह – सिद्धे योगे त्यजन्देहममृतत्वाय कल्पत इति । त्यजन्देहमितिवचनसामर्थ्याच्छरीरे नास्ति मुक्तिरिति दर्शयति । युक्तं चैतत् ।

मुक्तिर्हि बन्धाभावः । बन्धश्चोपाधिभूतान्तःकरणसंबन्धः । शरीरं च बध्यतेऽन्तःकरणेन, शरीरी तेनोपाधीयत इति व्याहतम् ।रागद्वेषमोहादीनां प्रक्षयोऽन्तर्धानादिगुणोदयश्च न मोक्षः, प्रत्युत मोक्षान्तरायः । अत एव च तत्राऽऽसक्तिर्योगिना परिहरणीयेति यत्नतः शास्त्रकारैरुच्यते ।।२०२।।२०३।।

एतत्सर्वं यतिं प्रत्यभिहितम् । वानप्रस्थं प्रतीदानीमाह –

**अथवायभ्यसन् वेदं न्यरतकर्मा वते (सुते) वसन् ।**
**अयाचिताशी मितभुक् परां सिद्धिमवाप्नुयात्**
**।।२०४।।**

चतुर्णां वेदानामेकं वेदमेकां शाखामरण्ये विजने । अयाचिताशी स्वयमुपनतान्नाशी, मितभुक्प्राणधारणायैव भुञ्जानो न्यस्तकर्मा त्यक्तकाम्यनिषिद्ध क्रियः । अथवा ब्रह्मणि निक्षिप्तावश्यकक्रियः । परां सिद्धिं मुक्तिमवाप्नुयात् ।।२०४।।

इदानीं गृहस्थं प्रत्याह –

**न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।**
**श्राद्धकृत् सत्यवादी च गृहस्थोऽपि हि मुच्यते ।२०५।।**

**इति यतिधर्मप्रकरणवर्णनम् ।**

न्यायेनानिषिद्धेन कर्मणाऽर्जितं स्वीकृतं धनं येन स न्यायार्जितधनः । तथा तत्त्वज्ञाने निष्ठा तात्पर्यं यस्य स तत्त्वज्ञाननिष्ठः । अतिथयः प्रिया यस्य सोऽतिथिप्रियः । तत्प्रियत्वेन च तत्पूजकत्वं लक्ष्यते । श्राद्धमावश्यकं पार्वणादिकं करोतीति श्राद्धकृत् । भूतहितार्थं वाक्यं सत्यं तद्वदतीत्येवंशीलः सत्यवादी । एवंविधो गृहस्थोऽपि विमुच्यतेऽपवृज्यते । अपिशब्देनान्येऽप्याश्रमिणो गृह्यन्ते । अत्र च न्यायार्जितधनत्वादिभिर्वर्णाश्रमधर्मा नित्यनैमित्तिकाश्चोपलक्षिता ज्ञानसहिता मुक्तये विधीयन्ते, तदेतद्व्याख्यानं केचिन्नानुमन्यन्ते, यत एतदर्थायाः स्मृतेरस्याः श्रुतिविरोधः स्यात् । तथा हि –

''न कर्मणा प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।
परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति''

इत्यनेन गृहस्थधर्माणां यागादिकर्मप्रजोत्पादनादीनाममृतत्व प्राप्तिहेतुभावं प्रतिषिध्य यतीनामेव तत्प्राप्तिर्विधीयते । तेनात्र त्यागशब्देन ब्रह्मचर्याद्याश्रमत्रयकर्मणां त्यागादमृतीभाव इति प्रतिपाद्यते । तथा यतिव्यतिरिक्ताश्रमिणां पुण्यलोकप्राप्तिर्यतेरेवामृतप्राप्तिरिति च्छान्दोग्योपनिषत् –

"सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति" इति ।।

ब्रह्मसंस्थो भिक्षुः । तथाऽग्निहोत्रादीन्यावश्यकानि कर्माणि दुरितक्षयाय श्रुत्या विहितानि । तानि मुक्तये विदधाना स्मृतिः श्रुत्या विरुध्यत एव । यदुच्यते श्रुत्यैव –

"विविदिषन्ति यज्ञेन दानेन तपसा न चै(ऽनाश)केन"

इत्यादिकया वर्णाश्रमकर्माणि मुक्तौ विनियुक्तानीति, तन्न ब्रह्मज्ञानेच्छायामेव ह्येषा श्रुतिः कर्मणां विनियोक्त्री, न मुक्तौ नापि तत्साधने ज्ञाने । इच्छाऽपि च विधेयप्रतियोगिनी भवति । यथा भेषजविशेषस्य बुभुक्षा ।।

ननु च प्रधानेऽन्यत्प्रधीयते न गुणे, विविदिषन्तीत्यत्र च वेदनमिच्छां प्रति प्रधानम् । तेन विद्यायामेवमाद्येच्छां प्रति कर्मीभूतायां कर्मणां विनियोगो नेच्छायाम् । यथाऽश्वेन जिगमिषतीत्यश्वस्य गतौ, न पुनस्तदिच्छायामित्युच्यते । सत्यं प्रधानेऽन्यद्विनियुज्यते । प्रधानं तु द्विविधम् – शाब्दामार्थं च । तत्र शाब्दमन्वय उपयुज्यते नाऽऽर्थम् । अत एव राजपुरुषमानयेति पुरुष आनयनेन संबध्यते, न राजाऽर्थतः प्रधानभूतोऽपि । स हि शब्देन विशेष(ष्य)तया प्रधानभूतं पुरुषं प्रति विशेषणतां नीयते । सन्नन्तेषु च शब्देषु इच्छैव प्रत्ययार्थत्वात्प्रधानम् । तेन तत्रैव यज्ञादिविनियोगः । अश्वस्य तु गत्यन्वयः प्रमाणान्तरवशान्न शब्दतः प्रसिद्धहेतुकायामपि विविदिषायां, वैदिको यज्ञादिरुपायः पशुप्राप्ताविव चित्रादिः "चित्रया यजेत पशुकामः" इत्यत्र ।

किञ्च कर्माणि कुर्वताऽहं कर्ता कर्मणां फलभोक्ता चेतिप्रत्यय दार्ढ्यमवलम्बनीयम् । तत्त्वज्ञाननिष्ठेन पुनरस्यैव प्रत्ययस्य मिथ्यात्व मापाद्यम् । ततश्च ज्ञानकर्मणोर्विरोधादसमुच्चयः षोडशिन इव ग्रहणाग्रहणयोः ।

किञ्च परमकार्याभेदेऽवान्तरव्यापारभेदे तु कारकं कारकान्तरेण समुच्चीयते । यथा ''अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति'' इत्यत्राऽऽरुण्यमेकहायन्या न पुनरवान्तरव्यापरैक्यै, न हि व्रीहयो यवैः समुच्चीयन्ते । तुल्यं च ज्ञानकर्मणोर्दुरितक्षपणमावन्तरकार्यम् । न च ज्ञानस्याविद्यानिवृत्तिरेव कार्यं न तु कर्मक्षय इति वाच्यम् । न हि कर्मजन्याया अबिद्यायाः कर्माण्यक्षपयता ज्ञानेन निवृत्तिः शक्या कर्तुम् । तस्मान्न्यायविरुद्धमपि समुच्चयस्मरणं स्मृत्यन्तरविरुद्धं च । तत्र महाभारते –

शुक उवाच –

''यदिदं वेदवचनं कुरु कर्म त्यजेति च ।
कां दिशं विद्यया याति कां च गच्छति कर्मणा ।।
एते चान्योन्यवैरूप्ये वर्तेते प्रतिकूलता(तः) ।
इत्युक्तः प्रत्युवाचेदं पराशरसुतः सुतम् ।।
कर्मविद्यामयावेतौ व्याख्यास्यामि क्षराक्षरौ ।
यां दिशं विद्यया याति यां च गच्छति कर्मणा ।।
शृणुष्वैकमनाः पुत्र गह्वरं ह्येतदन्तरम् ।
कर्मणा बध्यते जन्तुर्विद्यया च प्रमुच्यते ।।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ।

कर्मणा जायते प्रेत्य मूर्तिमान्षोडशात्मकः ।।
विद्यया जायते नित्यमव्ययो ह्यव्ययात्मकः ।
कर्म त्वेके प्रशंसन्ति स्वल्पबुद्धितरा नराः ।।
तेन ते देहजातानि रमयन्त उपासते ।
ये तु बद्धिपथं प्राप्ता धर्मनैपुणदर्शिनः ।।
न ते कर्म प्रशंसन्ति कूपं नद्यां पिबन्निव ।
कर्मणा फलमाप्नोति सुखदुःखे भवाभावौ ।।
विद्यया तदवाप्नोति यत्र गत्वा न शोचति ।
यत्र गत्वा न म्रियते यत्र गत्वा न जायते ।।
न हीयते यत्र गत्वा यत्र गत्वा न वर्धते'' इति ।

मार्कण्डेयपुराणे पितापुत्रसंवादे –

''एवं संसारचक्रेऽस्मिन्भ्रमता तात संकटे ।
ज्ञानमेतन्मया प्रोक्तं मोक्षसंप्राप्तिकारणम् ।।
विज्ञाते यत्र सर्वोऽयभृग्यजुःसमासंज्ञितः ।
क्रियाकलापो विगुणो न सम्यक्प्रतिभाति मे ।।
तस्मादुत्पन्नबोधस्य वेदैर्मे किं प्रयोजनम्'' ।
बृहस्पतिः –
''सत्यं ज्ञानं तपो दानमेतद्धर्मस्य साधनम् ।।
धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते'' इति ।।

तस्मादुक्तविरोधपरिहाराय स्मृतिरियमेवं व्याख्यातव्या । गृहस्थोऽपि विधिविहितकर्मकारी मुक्त्यनर्होऽपि तत्त्वज्ञान निष्ठत्वाद्विमुच्यते किं पुनर्भिक्षुः कर्मत्यागी तत्त्वज्ञानैकनिष्ठ इति । तदेतदन्ये नानुमन्यन्ते । न हि समुच्चयविधायकस्मृतेः श्रुतिविरोधादप्रामाण्यमस्ति । यतः समुच्चयविधायकं

प्रत्यक्षमेव श्रुतिवाक्यमस्या मूलमस्ति । तद्यथा –

> "विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
> अविद्यया मृत्युं तीर्त्वा विद्याऽमृतमश्नुते" इति ।।

विद्या ब्रह्मज्ञानम् । अविद्या कर्म । तदुभयं सह समुच्चयं यो वेदानुष्ठानपर्यन्ततया ज़ानाति स कर्मणा मृत्युं मृत्युफलदं दुरितं तीर्त्वाऽतक्रम्य विद्ययाऽमृतमश्नुत इति प्रसिद्धार्थम् ।

अत्र च विद्याशब्दं देवताज्ञानपरत्वेन केचन व्याचक्षते, तदयुक्तम् । प्रकृतहान्यप्रकृतप्रक्रियाप्रसङ्गात् । "ईशा वास्यम्" इत्यादिना परमेश्वरस्यैव प्रकृतत्वात् । एवमत्र मन्त्रे विद्याकर्मणारगृतीभावे समुच्चयः । तदुपपादकतया चावान्तरव्यापारभेदो विद्यया मृत्युं तीर्त्वेति कथितः । त्त्वाप्रत्ययेन च विद्यां प्रति कर्मणोऽङ्गभावः ।

एतदेव स्पष्टयति – "विविदिषन्ति यज्ञेन" इत्यादिश्रुतिः । यद्यप्यत्र विविदिषा प्रत्ययार्थत्वाच्छब्दतः प्रधानं तथाऽपि न तत्र यज्ञान्वयो वाक्यप्रमेयोऽर्थसिद्धत्वात् । तथा हि - न हि विविदिषासंबन्धमन्तरेण विद्यार्थता यज्ञादीनामस्ति । न ह्यनिप्यमाणं प्रधानं भवति, तेन यज्ञादिन्प्रति विद्यायाः प्राधान्याद्विविदिषान्वयस्तेषां गम्यमानो न विधेयः, किन्तु विद्यान्वय एवाप्राप्तत्वात् ।

यथा "एतायाऽन्नाद्यकामं याजयेत्" इत्यत्र याजनान्वयमनूद्य यागान्वय एव प्राप्तोऽन्नाद्यकामस्य विधीयते । अत एव चाश्वेन जिगमिषतीत्यत्राश्वेन गत्यन्वयः शाब्द एव । अस्तु वा विविदिषैव यज्ञादीन्प्रति प्रधानं किं तु विविदिषाप्रयोजनीभूतया च विद्यया विशिष्टेच्छा

विविदिषोच्यते । यच्च प्रयोजनवतोऽङ्गं तत्प्रयोजनस्यापि । यथा ''अग्निं चित्वा सौत्रामण्या यजेत'' इति । अत्र सौत्रामण्यग्निं प्रत्यङ्गं भवन्ती तत्प्रयोजनं यागं प्रति चाङ्गतां याति । विद्याऽपि चापवर्गेण फलेन फलवती सतीच्छायाः प्रयोजनं भवति, न केवला । ततश्च विद्याङ्गभावं भजन्तोऽप्यविद्यादयोऽपवर्गेऽङ्गतां यान्ति । विद्यायाश्चापवर्गः फलं ''ब्रह्म विदाप्नोति परम् । ब्रह्म वेद ब्रह्म भवति'' इत्यादिवाक्यप्रसिद्धेः । न च वाच्यं यथाऽऽधानमाहवनीयादिस्वरूपा-त्पत्त्यङ्गं न तु तत्कार्योत्तर क्रत्वर्थं तथा यज्ञादयोऽपि विद्यास्वरूप-मुत्पादयन्ति न तु तत्कार्यमपवर्गं कुर्वन्तीति ।

युक्तं ह्याधानस्याऽऽहवनीयादिस्वरूपोत्पत्तिमात्रशेषत्वम् । न ह्याधानविद्यादशायां ''यदाहवनीये जुह्वति'' इत्यादिभिराहवनीयादीनां प्रयोजनवतामवगमोऽस्ति । प्रसिद्धे ह्याहवनीयादौ तत्प्रयोजनावगमो वति । तत्प्रासिद्धिश्चाऽऽधानविनियोगायत्ता । तेन पूर्वमाधानमग्निषु विनियोज्यं पश्चात्क्रतुष्वग्नयः तेनागत्या विनियोक्ष्यमाणतीन्द्रियाहवनीया दिस्वरूपशेषताऽऽधानस्याऽऽश्रीयते, न तु गतिसंभवे । संभवति चात्र गतिः ।

यज्ञादिविवियोगात्प्रागेव विद्याया अपवर्गताज्ञानात् । विद्या स्वरूपस्य चैन्द्रियकत्वात् । नच यथा पश्वादीनां प्रमाणान्तराद्विदित पुरुषार्थभावानां शास्त्रेण चित्रादिरुपायो विधीयते तथा विद्यायां यज्ञादिरिति वाच्यम् । तस्य प्रमाणान्तरतः पुरुषार्थत्वादेदनात् । तस्माच्छास्त्रावगम्यापवर्गहेतुभूतायां विद्यायां साक्षादिच्छाद्वारेण वा यज्ञादयो विनियुज्यन्त इति सिद्धम् । ततश्च सर्वाण्येवाऽऽवश्यकानि वर्णाश्रमकर्माणि

मोक्षे साध्ये ब्रह्मज्ञानेन समुच्चियन्ते । "न कर्मणा" इत्यादयस्तु कर्मणां मोक्षोपायत्वनिषेधाज्ज्ञानरहितकर्मविषयाः । अन्यथा समुच्चयविधिनिरोधः स्यात् । अत एव मन्त्रेणाविद्याशब्दवाच्यं कर्म केवलं निन्दित्वा विद्याऽपि केवला निन्द्यते "अन्धं तमः प्रविशन्ति ये विद्यामुपासते । ततो भूय इव ते तमो यदविद्यायां रताः" इति ।

यदपि च "सर्व एते पुण्यलोका भवन्ति" इति वाक्यं तदपि केवलकर्मविषयम् । "ब्रह्मसंस्थोऽमृतत्वमेति" इत्यस्यायमर्थः – प्रकृतानामाश्रमिणां मध्ये यो ब्रह्मसंस्थो ब्रह्मप्रवणो ब्रह्मज्ञानाङ्गभूतं कर्म करोतीति यावत्, सोऽमृतत्वमेतीति । न पुनर्ब्रह्मसंस्थशब्देन भिक्षुराख्याते । तस्य तत्संज्ञत्वे प्रमाणाभावात् । योऽपि विद्यामकर्मणोर्विरोध उक्तः सोऽपि नोपासनात्मिकया विद्यया किन्तु साक्षात्कारात्मिकया ।

तथा चोक्तम् –

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इति ॥

तस्मेद्गृहस्थोऽपि विमुच्यत इति स्मृतिर्न भङ्गेन व्याख्येया । गृहस्थस्य तु मुक्तिरुक्ता छान्दोग्ये " कुटुम्बी शुचौ देशे वेदमधीयानो धार्मिकान्विवधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन्सर्वभूतानि अन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न पुनरावर्तते" इति । विहिता हिंसा तीर्थानि(र्थेषु) ब्रह्मैव लोको ब्रह्मलोकः । मुक्तौ ज्ञानकर्मसमुच्चयं स्मृतिकाराश्चाऽऽहुः ।

तत्र मनु :–

"सुखाभ्युदयिकं चैतन्नैःश्रेयसिकमेव च ।

प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ।।
इह वाऽमुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते ।
ज्ञानपूर्वं तु विद्वद्भिर्निवृत्तमुपदिश्यते ।।
प्रवृत्तं कर्म संसेव्य देवानामेति सात्म्यताम् ।
निवृत्तं सेवमानस्तु भूतान्पश्यति पञ्च वै'' ।।

वासिष्ठः–

''यथाऽन्नं मधुसंयुक्तं मधु चान्नेन संयुतम् ।
एवं तपश्च विद्या च संयुक्तं भेषजं महत्'' ।।

योगयाज्ञवल्क्यः–

''परिज्ञानाद्भवेन्मुक्तिरेतदालस्यलक्षणम् ।
कायक्लेशभयाच्चैव कर्म नेच्छन्ति पण्डिताः ।।
ज्ञानकर्मसमायोगात्परमाप्नोति पूरुषः ।
पृथग्भावो न सिध्येत उभे तस्मात्समाश्रयेत्'' ।।

इत्यादि । तच्च न्यायार्जितधन इत्यादिस्मृतिर्मुख्यतयैव व्याख्यातव्येति । तदनयोर्मतयोर्यन्न्याय्यं तद्ग्राह्यम् ।।२०५।।

इति श्रीविद्याधरवंशप्रभवश्रीशिलाहारनरेन्द्रजीमूतवाहानान्वय-प्रसूतश्रीमदपरादित्यदेवविरचिते याज्ञवल्कीयधर्मशास्त्रनिबन्धेऽपरार्के

समाप्तं यतिप्रकरणम् ।।

**।।अथ मनुस्मृतौ यतिधर्मविचारः ।।**

**प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम् ।**
**आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्धरिम् ।।३८।।**

जाबालश्रुतिः -'ब्रह्मचर्यं समाप्य गृही भवेद्गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेत् । इतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा' ।। ३८।।

**यो दत्त्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात् ।**
**तस्य तेजोमया लोका भवन्ति ब्रह्मवादिनः।।३९।।**

य इत्यादि ।। यः सर्वेभ्यो भूतारब्धेभ्यः स्थावरजङ्गमेभ्योऽभ्यं दत्त्वा गृहाश्रमात्प्रव्रजति तस्य ब्रह्मप्रतिपादकोपनिषन्निष्टस्य सूर्याद्यालोकरहिता हिरण्यगर्भादिर्लोकास्तत्तेजसैव प्रकाशा भवन्ति । तानाप्नोतीत्यर्थः ।।३९।।

**यस्मादण्वपि भूतानां द्विजान्नोत्पद्यते भयम् ।**
**तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन ।।४०।।**

यस्मादित्यादि ।। यस्माद्विजात्सूक्ष्ममपि भयं भूतानां न भवति तस्य देहाद्विमुक्तस्य वर्तमानदेहनाशे कस्मादपि भयं न भवति ।।४०।।

**अगारादभिनिष्क्रान्तः पवित्रोपचितो मुनिः ।**
**समुपोढेषु कामेषु निरपेक्षः परिव्रजेत् ।।४१।।**

अगारादिति ।। गृहान्निर्गतः पवित्रैर्दण्डकमण्डल्वादिभिर्युक्तो मुनिर्मौनी समुपोढेषु कामेषु केनचित्सम्यक्समीपं प्रापितेषु स्वाद्वन्नादिषु विगतस्पृहः परिव्रजेत् । मेधातिथिस्तु 'पवित्रैर्मन्त्रजपैरथवा पावनैः

कृच्छ्रैर्युक्तः' इति व्याचष्टे ।।४१।।

**एक एव चरेन्नित्यं सिद्ध्यर्थमसहायवान् ।**
**सिद्धिमेकस्य संपश्यन्न जहाति न हीयते ।।४२।।**

एक इत्यादि ।। एकस्य सर्वसङ्गविरहिणो मोक्षावाप्तिर्भवतीति जानन्नेक एव सर्वदापि मोक्षार्थं चरेत् । एक एवेत्यनेन पूर्वपरिचितपुत्रादित्याग उच्यते । असहायवानित्युत्तरस्यापि एकाकी यदि चरति स किञ्चिन्न त्यजति न कस्यापि त्यागेन दुःखमनुभवति नापि केनापि त्यज्यते न कोऽप्यनेन त्यागदुःखमनुभाव्यते । ततश्च सर्वत्र निर्ममत्वः सुखेन मुक्ति -माप्नोति ।।४२।।

**अनग्निानिकेतः स्याद्ग्राममन्नार्थमाश्रयेत् ।**
**उपेक्षकोऽसंकुसुको मुनिर्भावसमाहितः ।।४३।।**

अनग्निरित्यादि ।। अनग्निर्लौकिकाग्निसंयोगरहितः शास्त्रीयाग्निं समारोप्येति पूर्वमुक्तत्वात् । अनिकेतो गृहशून्यः, उपेक्षकः शरीरस्य व्याध्याद्युत्पादे तत्प्रतीकाररहितः, असंकुसुकः स्थिरमतिः, असंचयिक इत्यन्ये पठन्ति । मुनिर्ब्रह्ममननात्, मौनस्य पूर्वोक्तत्वात् । भावेन ब्रह्मणि समाहितस्तदेकतानमनाः अरण्ये च दिवारात्रौ वसन्भिक्षार्थमेव ग्रामं प्रविशेत् ।।४३।।

**कपालं वृक्षमूलानि कुचेलमसहायता ।**
**समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ।।४४।।**

कपालमित्यादि ।। मृन्मयकर्परादिभिक्षापात्रं, वासार्थं वृक्षमूलानि,

स्थूलजीर्णवस्त्रं कौपीनकन्था, सर्वत्र ब्रह्मबुद्ध्या शत्रुमित्राभावः, एतन्मुक्तिसाधनत्वान्मुक्तस्य लिङ्गम् ।।४४।।

**नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।**
**कालमेव प्रतीक्षेत निर्देशं भृतको यथा ।।४५।।**

नेत्यादि ।। मरणं जीवनं च द्वयमपि न कामयेत्किन्तु स्वकर्माधीनं मरणकालमेव प्रतीक्षेत । निर्दिश्यत इति निर्देशो भृतिस्तत्परिशोधनकालमिव भृतकः ।।४५।।

**दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ।**
**सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ।।४६।।**

दृष्टिपूतमित्यादि ।। केशास्थादिपरिहारार्थं दृष्टिशोधितभूमौ पादौ क्षिपेत् । जलेषु क्षुद्रजन्त्वादिवारणार्थं वस्त्रशोधितं जलं पिबेत् । सत्यपवित्रां वाचं वदेत् । ततश्च मौनेन सह सत्यस्य विकल्पः । प्रतिषिद्धसंकल्पशून्यमनसा सर्वदा पवित्रात्मा स्यात् ।।४६।।

**अतिवादांस्तितिक्षेत नावमन्येत कंचन ।**
**न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ।।४७।।**

अतिवादानित्यादि ।। अतिक्रमवादान्परोक्तान्सहेत न कंचित्परिभवेत् । नेमं देहमस्थिरं व्याध्यायतनमाश्रित्य तदर्थं केनचित्सह वैरं कुर्यात् ।।४७।।

**क्रुद्ध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ।**
**सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ।।४८।।**

क्रुद्ध्यन्तमित्यादि ।। संजातक्रोधाय कस्मैचित्प्रतिक्रोधं न कुर्यात् । निन्दितश्चान्येन वाचं भद्रां वदेत् ननु निन्देत् । सप्तद्वारावकीर्णमिति । चक्षुरादीनि पञ्चबहिर्बुद्धीन्द्रियाणि मनोबुद्धिरित्यन्तःकरणद्वयं वेदान्तदर्शन एतैर्गृहीतेषु स्वेषु वाचा प्रवृत्तेरेतानि सप्त द्वाराणीत्युच्यन्ते, एतैरवकीर्णं निक्षिप्तां तद्गृहीतार्थविषयां वाचं न वदेत्किन्तु ब्रह्ममात्रविषयां वदेत् । ननु मनसैव ब्रह्मोपास्यते ब्रह्मविषयवागुच्चारणमपि मनोव्यापारस्तत्कथं सप्तद्वारावकीर्णत्वविशेषेऽपि ब्रह्मविषयां वदेदित्यन्यविषयां न वदेदिति लभ्यते । उच्यते । अत एवानृतामिति विशेषयति स्म, अनृतमसत्यं विनाशीति यावत्, तद्विषया वागप्यनृतोच्यते तेन विनाशिकार्यविषयां वाचं नोच्चारयेत् । अविनाशिब्रह्मविषयां तु प्रणवोपनिषदादिरूपां वदेत् । गोविन्दराजस्तु धर्मोऽर्थः कामो धर्मार्थावर्थकामौ धर्मार्थकामा इत्येतानि सप्त वाग्विषयतया वाक्प्रवृत्तेर्द्वाराणि, तेष्ववकीर्णां विक्षिप्तां सर्वस्य भेदस्यासत्वात्तद्विषयामसत्यरूपां वाचं न वदेत् । अन्येतु सप्त भुवनान्येव वाग्विषयत्वात्सप्त द्वाराणि तेषां भेदाद्विनाशित्वाच्चासत्यतया तद्विषयां वाचमसत्यां न वदेत्केवलं ब्रह्मविषयां वदेत् ।।४८।।

**अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ।**
**आत्मनैव सहायेन सुखार्थी विचरेदिह ।।४९।।**

अध्यात्मेति ।। आत्मानं ब्रह्माधिकृत्य रतिर्यस्य सोऽध्यात्मरतिः सर्वदा ब्रह्मध्यानपरः, आसीन इति स्वस्तिकादियोगासननिष्टः, निरपेक्षो दण्डकमण्डल्वादिष्वपि विशेषापेक्षाशून्यः, निरामिषः आमिषं विषयास्तदभिलाषरहितः, आत्मना देहेनैव सहायेन मोक्षसुखार्थीह संसारे विचरेत् ।।४९।।

**न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ।**
**नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥५०॥**

नेत्यादि ॥ भूकम्पाद्युत्पातचक्षुःस्पन्दादिनिमित्तफलकथनेन, अद्याश्विनी हस्तरेखादेरीदृशं फलमिति नक्षत्राङ्गविद्यया, ईदृशो नीतिमार्ग इत्थं वर्तितव्यं इत्यनुशासनेन शास्त्रर्थकथनेन च कदाचिन्न भिक्षां लब्धुमिच्छेत् ॥५०॥

**न तापसैर्ब्राह्मणैर्वा वयोभिरपि वा श्वभिः ।**
**आकीर्णं भिक्षुकैर्वान्यैरगारमुपसंव्रजेत् ॥५१॥**

न तापसैरित्यादि ॥ वानप्रस्थैरन्यैर्वा ब्राह्मणैर्भक्षणशीलैः, पक्षिभिः, कुक्कुरैर्वाव्याप्तं गृहं भिक्षार्थं न प्रविशेत् ॥५१॥

**क्लृप्तकेशनखश्मश्रुः पात्री दण्डी कुसुम्भवान् ।**
**विचरेन्नियतो नित्यं सर्वभूतान्यपीडयन् ॥५२॥**

क्लृप्तेत्यादि ॥ क्लृप्तकेशनखश्मश्रुर्भिक्षापात्रवान् दण्डी कुसुम्भः कमण्डलुस्तद्युक्तः सर्वप्राणिनोऽपीडयन्सर्वदा परिभ्रमेत् ॥५२॥

**अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च ।**
**तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे ॥५३॥**

अतैजसेति ॥ सौवर्णादिवर्जितानि निश्छिद्राणि भिक्षोर्भिक्षापात्राणि भवेयुः। तथा यमः - 'सुवर्ररूप्यपात्रेषु ताम्रकांस्यायसेषु च । गृह्णन्भिक्षां न धर्मोऽस्ति गृहीत्वा नरकं व्रजेत् ॥' तेषां च यतिपात्राणां जलेनैव तु शुद्धिः यज्ञे चमसानामिव ॥५३॥

तान्येव दर्शयति -

**अलाबुं दारुपात्रं च मृन्मयं वैदलं तथा ।**
**एतानि यतिपात्राणि मनुः स्वायंभुवोऽब्रवीत्  ॥५४॥**

अलाबुमित्यादि ॥ अलाबुदारुमृत्तिकावंशादिखण्डनिर्मितानि यतीनां भिक्षापात्राणि स्वायंभुवो मनुरवदत् । वैदलं तरुत्वङ्निर्मितमिति गोविन्दराजः ॥५४॥

**एककालं चरेद्भैक्षं न प्रसज्जेत विस्तरे ।**
**भैक्षे प्रसक्तो हि यतिर्विषयेष्वपि सज्जति  ॥५५॥**

एककालमिति ॥ एकवारं प्राणधारणार्थं भैक्षं चरेत् । तत्रापि प्रचुरभिक्षाप्रसङ्गं न कुर्यात् । यतो बहुतरभिक्षाभक्षणप्रसक्तो यतिः प्रधानधातुवृद्ध्या ..यादिविषयेष्वपि प्रसज्जते ॥५५॥

**विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।**
**वृत्ते शरावसंपाते भिक्षां नित्यं यतिश्चरेत्  ॥५६॥**

बिधूमि इत्यादि ॥ विगतपाकधूमे, निवृत्तावहननमुसले, निर्वाणपाकाङ्गारे, गृहस्थपर्यन्तभुक्तवज्जने, उच्छिष्टशरावेषु त्युक्तेषु, सर्वदा यतिर्भिक्षां चरेत् । एतच्च दिनशेषमुहूर्तत्रयरूपसायाह्नोपलक्षणम् । तथाह याज्ञवल्कयः- 'अप्रमत्तश्चरेद्भैक्षं सायाह्नेनाभिसंधितः' ॥५६॥

**अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत् ।**
**प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः  ॥५७॥**

अलाभ इत्यादि ।। भिक्षादेरलाभे न विषीदेत् । लाभे च हर्षं न कुर्यात् । प्राणस्थितिमात्रोपचितान्नभोजनपरः स्यात् । दण्डकमण्डलु मात्रास्वपि इदमशोभनं त्यजामि इदं रुचिरं गृह्णामि इत्यादिप्रसङ्गं न कुर्यात् ।।५७।।

**अभिपूजितलाभांस्तु जुगुप्सेतैव सर्वशः ।**
**अभिपूजितलाभैश्च यतिर्मुक्तोऽपि बद्ध्यते ।।५८।।**

अभीत्यादि ।। पूजापूर्वकभिक्षालाभं सर्वकालं निन्देत् । न स्वीकुर्यादित्यर्थः । यस्मात्पूजापूर्वकलाभस्वीकारे दातृगोचरस्नेहममत्वादि भिरासन्नमुक्तिरपि यतिर्जन्मबन्धाँल्लभते ।।५८।।

**अल्पान्नाभ्यवहारेण रहःस्थानासनेन च ।**
**ह्रियमाणानि विषयैरिन्द्रियाणि निवर्तयेत् ।।५९।।**

अल्पेत्यादि ।। आहारलाघवेन निर्जनदेशस्थानादिना च रूपादिविषयैराकृष्यमाणानीन्द्रियाणि निवर्तयेत् ।।५९।।

**इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।**
**अहिंसया च भूतानाममृतत्वाय कल्पते ।।६०।।**

इन्द्रियाणामित्यादि ।। यस्मात् इन्द्रियाणां निग्रहेण रागद्वेषाभावेन च प्राणिहिंसाविरतेन च मोक्षयोग्यो भवति ।।६०।।

इदानीमिन्द्रियनियमोपायविषयवैराग्याय संसारतत्त्व-चिन्तनमुपदिशति -

**अवेक्षेत गतीर्नृणां कर्मदोषसमुद्भवाः ।**

**निरये चैव पतनं यातनाश्च यमक्षये ॥६१॥**

अवेक्षेतेत्यादि ॥ विहिताकरणनिन्दिताचरणरूपकर्मदोषजन्यां मनुष्याणां पश्वादिदेहप्राप्तिं नरकेषु पतनं यमलोके नरकस्थस्य निशितनिस्त्रिंशच्छेदनादिभवास्तीव्रवेदनाः श्रुतिपुराणादिषूक्ताश्चिन्तयेत् ॥६१॥

**विप्रयोगं प्रियैश्चैव संयोगं च तथाऽप्रियैः ।**
**जरया चाभिभवनं व्याधिभिश्चोपपीडनम् ॥६२॥**

विप्रयोगामित्यादि ॥ इष्टपुत्रादिवियोगं, अनिष्टहिंसकादियोगं, जराभिभवनं, व्याध्यादिभिश्च पीडनं कर्मदोषसमुद्भवमनुचिन्तयेत् ॥६२॥

**देहादुत्क्रमणं चास्मात्पुनर्गर्भे च संभवम् ।**
**योनिकोटिसहस्रेषु सृतीश्चास्यान्तरात्मनः ॥६३॥**

देहादित्यादि ॥ अस्माद्देहादस्य जीवात्मन उत्क्रमणं तथाच मर्मभिद्भिर्महारोगपतितस्य श्लेष्मादिदोषनिरुद्धकण्ठस्य महतीं वेदनां गर्भे चोत्पत्तिदुःखबहुलां श्वभृगालादिनिकृष्टजातियोनिकोटिसहस्रगमनानि स्वकर्मबन्धान्यनुचिन्तयेत् ॥६३॥

**अधर्मप्रभवं चैव दुःखयोगं शरीरिणाम् ।**
**धर्मार्थप्रभवं चैव सुखसंयोगमक्षयम् ॥६४॥**

अधर्मेत्यादि ॥ शरीरवतां जीवात्मनामधर्महेतुकं दुःखसंबन्धं धर्महेतुकोऽर्थो ब्रह्मसाक्षात्कारस्तत्प्रभवं मोक्षलक्षणमक्षयं ब्रह्मसुखसंयोगं चिन्तयेत् ॥६४॥

**सूक्ष्मतां चान्ववेक्षेत योगेन परमात्मनः ।**
**देहेषु च समुत्पत्तिमुत्तमेष्वधमेषु च ।।६५।।**

सूक्ष्मतामित्यादि ।। योगेन विषयान्तरचित्तवृत्तिनिरोधेन परमात्मनः स्थूलशरीराद्यपेक्षया सर्वान्तर्यामित्वेन सूक्ष्मतां निरवयवतां तत्त्यागादुत्कृष्टापकृष्टेषु देवपश्वादिशरीरेषु जीवानां शुभाशुभ फलभोगार्थमुत्पत्तिमधिष्ठानमनुचिन्तयेत् ।।६५।।

**दूषितोऽपि चरेद्धर्मं यत्र तत्राश्रमे रतः ।**
**समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ।।६६।।**

दूषित इति ।। यस्मिन्मस्मिंश्चिदाश्रमे स्थितस्तदाश्रमिविरुद्धाचार दूषितोऽप्याश्रमलिङ्गंरहितोऽपि सर्वभूतेषु ब्रह्मबुद्ध्या समदृष्टिः सन् धर्म मनुतिष्ठेत् । नहि दण्डादिलिङ्गधारणमात्रं धर्मकारणं किन्तु विहितानुष्ठानं, एतच्च धर्मप्रधानन्यबोधनायोक्तं नतु लिङ्गपरित्यागार्थम् ।।६६।।

अत्र दृष्टान्तमाह -

**फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम् ।**
**न नामग्रहणादेव तस्य वारि प्रसीदति ।।६७।।**

फलमिति ।। यद्यपि कतकवृक्षस्य फलं कलुषजलस्वच्चताजनकं तथापि तन्नामोच्चारणवाशान्न प्रसीदति किन्तु फलप्रक्षेपेण, एवं न लिङ्गधारणमात्रं धर्मकारणं किन्तु विहितानुष्ठानम् ।।६७।।

**संरक्षाणर्थं जन्तूनां रात्रावहनि वा सदा ।**
**शरीरस्यात्यये चैव समीक्ष्य वसुधां चरेत् ।।६८।।**

संरणक्षणार्थमित्यादि ।। शरीरस्यापि पीडायां सूक्ष्मपिपीलिकादि प्राणरक्षार्थं रात्रौ दिवसे वा सदा भूमिं निरीक्ष्य पर्यटेत् । पूर्वं केशादिपरिहारार्थं 'दृष्टिपूतं न्यसेत्पादम्' इत्युक्तं, इदं तु हिंसापरिहारार्थमित्यपुनरुक्तिः ।।६८।।

अत्र प्रायश्चित्तमाह -

**अह्ना रात्र्या च याञ्जन्तून्हिनस्त्यज्ञानतो यतिः ।**
**तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान्षडाचरेत् ।।६९।।**

अह्ना रात्र्येति ।। यतिर्यानज्ञानतो दिवसे रात्रौ वा प्राणिनो हन्ति तद्धननजनितपापनाशार्थं स्नात्वा षट् प्राणायामान्कुर्यात् । प्राणायामश्च 'सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते' इति वसिष्ठोक्त्यात्र द्रष्टव्यः ।।६९।।

**प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत्कृताः ।**
**व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तपः ।।७०।।**

प्राणायामा इति ।। ब्राह्मणस्येति निर्देशाद्ब्राह्मणजातेरयमुपदेशो न यतेरेव । त्रयोऽपि प्राणायामाः सप्तभिर्व्याहृतिभिर्दशभिः प्रणवैर्युक्ताः, विधिवदित्यनेन सावित्र्या शिरसा च युक्ताः, पूरककुम्भकरेचकविधिना कृता ब्राह्मणस्य श्रेष्ठं तपो ज्ञातव्यम् । पूरकादिस्वरूपं स्मृत्यन्तरेषु ज्ञेयम् । तथा योगियज्ञवल्कयः - 'नासिकोत्कृष्ट उच्छ्वासो ध्मातः पूरके उच्यते । कुम्भको निश्चलश्वासो मुच्यमानस्तु रेचकः' । त्रयोऽपीत्यपिशब्देन त्रयोऽवश्यं कर्तव्याः, अधिककरणे त्वधिकपापक्षयः ।।७०।।

**दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।**

**तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥७१॥**

दह्यन्त इति ॥ धातूनां स्वर्णरजतादीनां यथा मूषायामग्निना मायमानानां मलद्रव्याणि दह्यन्ते, एवं मनसो रागादयश्चक्षुरादेश्च विषयप्रवणत्वादयो दोषाः प्राणायामेन विषयानभिध्यानाद्दह्यन्ते ॥७१॥

**प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषम् ।**
**प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान् ॥७२॥**

प्राणायामैरित्यादि ॥ एवं सति अनन्तरोक्तप्रकारेण प्राणायामै रागादिदोषान्दहेत् । अपेक्षितदेशे परब्रह्मादौ यन्मनसो धारणं सा धारणा तया पापं नाशयेत् । प्रत्याहारेण विषयेभ्य इन्द्रियाकर्षणैर्विषय-संपर्कान्तवारयेत् । ब्रह्मध्यानेनेति सोऽहमस्मीति सजातीयप्रत्ययप्रवाह-रूपेणानीश्वरान्गुणान् ईश्वरस्य परमात्मनो ये गुणा न भवन्ति क्रोध लोभासूयादयः तान्निवारयेत् ॥७२॥

**उच्चावचेषु भूतेषु दुर्ज्ञेयामकृतात्मभिः ।**
**ध्यानयोगेन संपश्येद्गतिमस्यान्तरात्मनः ॥७३॥**

उच्चावचेष्वित्यादि ॥ अस्य जीवस्योत्कृष्टापकृष्टेषु देवपश्वादिषु जन्मप्राप्तिमकृतात्मभिः शास्त्रैरसंस्कृतान्तःकरणेर्दुर्ज्ञेयां ध्यानाभ्यासेन सम्यक् सकारणकं जानीयात् । ततश्चाविद्याकाम्यनिषिद्धकर्मनिर्मितेयं गतिरिति ज्ञात्वा ब्रह्मज्ञाननिष्ठो भवेदिति तात्पर्यार्थः ॥७३॥

**सम्यग्दर्शनसंपन्नः कर्मभिर्न निबद्ध्यते ।**
**दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ॥७४॥**

सम्यग्दर्शनेति ।। ततश्च तत्त्वतो ब्रह्मसाक्षात्कारवान्कर्मभिर्न निबध्यते कर्माणि तस्य पुनर्जन्मने न प्रभवन्ति, पूर्वार्जितपापपुण्यस्य ब्रह्मज्ञानेन नाशात् । तथाच श्रुतिः - 'तद्यथषषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त उभौ ब्रह्मैवैष भवति' इति श्रुत्या । तथा 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति अविशेषश्रुत्या । पुण्यसंबन्धोऽपि बोध्यते, उत्तरकाले च दैवात्पापे कर्मणि प्रकृतेऽपि न पापसंश्लेषः । तथाच श्रुतिः - 'पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' इति । देहारम्भकपापपुण्यसंबन्धः परं नश्यति । अयमेव चार्थो ब्रह्ममीमांसायां 'तदधिगम उत्तरपूर्वाधयोरश्लेषविनाशौ तव्द्यपदेशात्' इति सूत्रेण बादरायणेन निरणायि । ब्रह्मसाक्षात्कारशून्यस्तु जन्ममरणप्रबन्धं लभते ।।७४।।

**अहिंसयेन्द्रियासङ्गैर्वैदिकैश्चैव कर्मभिः ।**
**तपसश्चरणैश्चोग्रैः साधयन्तीह तत्पदम् ।।७५।।**

अहिंसयेति ।। निषिद्धहिंसावर्जनेनेन्द्रियाणां च विषयसङ्गपरिहारेण वैदिकैर्नित्यैः कर्मभिः, काम्यकर्मणां बन्धहेतुत्वात् ।

उक्तंच - 'कामात्मता न प्रशस्ता' इति । तपसश्च यथा संभवमुपवासकृच्छ्रचान्द्रायणादेरनुष्ठानैरिह लोके तत्पदं ब्रह्मात्यन्तिक लय लक्षणं प्राप्नुवन्ति । पूर्वश्लोकेन ब्रह्मदर्शनस्य मोक्षहेतुत्वमुक्तं अनेन तत्सहकारितया कर्मणोऽभिहितम् ।।७५।।

इदानीं मोक्षान्तरङ्गोपायसंसारवैराग्याय देहस्वरूपमाह श्लोकद्वयेन

**अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम् ।**
**चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ।।७६।।**

**जराशोकसमाविष्टं रोगायतनमातुरम् ।**
**रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ।।७७।।**

अस्थीत्यादि ।। जरेत्यादि च ।। अस्थीन्येव स्थूणा इव यस्य तं अस्थिस्थूणं, स्नायुरज्जुभिराबद्धं, मांसरुधिराद्युपलिप्तं, चर्माच्छादितं, मूत्रपुरीषाभ्यां पूर्णमत एव दुर्गन्धि । जरोपतापाभ्यामाक्रान्तं, विविधव्याधीनामाश्रयं, आतुरं क्षुत्पिपासाशीतोष्णादिकातरं, प्रायेण रजोगुणयुक्तं, विनश्वरस्वभावंच, आवासो गृह पृथिव्यादिभूतानि तेषामावासं, देहमेव जीवस्य गृहत्वेन निरूपितं त्यजेत् । यथा पुनर्देहसंबन्धो न भवेत्तथा कुर्यात् । गृहसाम्यमेवोक्तमस्थीत्यादिना ।।७६।।७७।।

**नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा ।**
**तथा त्यजन्निमं देहं कृच्छ्राद्ग्राहाद्विमुच्यते ।।७८।।**

नदीकूलमिति ।। ब्रह्मोपासकस्य देहत्यागसमये मोक्षः, आरब्धदेहस्य कर्मणो भोगेनैव नाशात् तत्र देहत्यक्तुर्द्वैविध्यमाह । यः कर्माधीनं देहपातमवेक्षते स नदीकूलं यथा वृक्षस्त्यजति स्वपातमजानन्नेव नदीरयेण पात्यते, तथा देहं त्यजन्यश्च ज्ञानकर्मप्रकर्षाद्भीष्मादिवत्स्वाधीनमृत्युः स यथा पक्षी वृक्षं स्वेच्छया त्यजति तथा देहमिमं त्यजन् संसारकष्टाद्ग्राहादिव जलचरप्राणिभेदाद्विमुच्यते ।।

**प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।**

**विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम्       ॥७९॥**

प्रियेष्वित्यादि ॥ ब्रह्मविदात्मीयेु प्रियेषु हितकारिषु सुकृतं अप्रियेष्वहितकारिषु दुष्कृतं निक्षिप्य ध्यानयोगेन नित्यं ब्रह्माभ्येति ब्रह्मणि लीयते । तथाच श्रुतिः 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति । अपरा श्रुतिः 'तत् सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्' इत्येवमादीन्येव वाक्यान्युदाहृत्य सुकृतदुष्कृतयोर्हानिमात्रश्रवणेऽप्युपायनं प्रतिपत्तव्यमिति ब्रह्ममीमांसायां 'हानौ तूपायनशब्द शेषत्वात्कुशाच्छन्दस्तुत्युपगायनवत्तदुक्तम्' इत्यादिसूत्रैर्बादरायणेन निरणायि ॥ ननु परकीयसुकृतदुष्कृतयोः कथं परत्र संक्रान्तिः । उच्यते । धर्माधर्मव्यवस्थायां शास्त्रमेव प्रमाणं, संक्रामोऽपि तयोः शास्त्रप्रमाणक एव । अतः शास्त्रत्संक्रमणयोग्यावेतौ सिध्यतः । अतः शास्त्रेण बाधान्न प्रतिपक्षानुमानोदयः, शुचि नरशिरः कपालं प्राण्यङ्गत्वाच्छङ्खादिवदितिवत् । मेधातिथिगोविन्दराजौ तु स्वेषु प्रियेषु केनचित्कृतु ध्यानाभ्यासेनात्मीत्यमेव सुकृतं तत्र कारणत्वेनारोप्य, एवमप्रियेष्वपि केनचित्कृतेष्वात्मीयमेव प्राग्जनर्जितं दुष्कृतं कारणत्वेन प्रकल्प्योद्धृत्य तत्संपादयितारौ पुरुषौ रागद्वेषाख्यौ त्यक्त्वा नित्यं ब्रह्माभ्येति ब्रह्मस्वभावमुपगच्छतीति व्याचक्षाते । तन्न । विसृज्येति क्रियायां सुकृतं दुष्कृतमिति कर्मद्वयत्यागेन तत्संपादयितारा वित्यश्रुत कर्माध्याहारात्, कर्मद्वये च श्रुतक्रियात्यागेन कारणत्वेन प्रकल्प्ये त्याद्यश्रुतक्रियाध्याहारात् । किञ्च । 'व्यासव्या ख्यात वेदार्थमेवमस्या मनुस्मृतेः । मन्ये न कल्पितं गर्वादर्वाचीनैर्विचक्षणैः' ॥७९॥

**यदा भावेन भवति सर्वभावेषु निःस्पृहः ।**

**तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम् ।।८०।।**

यदेति ।। यदा परमार्थतो विषयदोषभावनया सर्वविषयेषु निरभिलाषो भवति तदेह लोके संतोषजन्यसुखं परलोके च मोक्षसुखमविनाशि प्राप्नोति ।।८०।।

**अनेन विधिना सर्वांस्त्यक्त्वा सङ्गाञ्छनैः शनैः ।**
**सर्वद्वन्द्वविनिर्मुक्तो ब्रह्मण्येवावतिष्ठतो ।।८१।।**

अनेनेति ।। पुत्रकलत्रक्षेत्रादिषु ममत्वरूपान्क्रमेण सङ्गान्सर्वांस्त्यक्त्वा द्वन्द्वैर्मानापमानादिभिर्निर्मुक्तोऽनेन यथोक्तेन ज्ञानकर्मनुष्ठानेन ब्रह्मण्येवात्यन्तिकं लयमाप्नोति ।।८१।।

**ध्यानिकं सर्वमेवैतद्यदेतदभिशब्दितम् ।**
**न ह्यनध्यात्मवित्कश्चित्क्रियाफलमुपाश्नुते ।।८२।।**

ध्यानिकमिति ।। यदेतदित्यत्यन्तसंनिधानात्पूर्वश्लोकोदितं परामृश्यते । यदेतदुक्तं पुत्रादिममत्वत्यागो मानापमानादिहानिर्ब्रह्मण्येवावस्थानं सर्वमेवैतध्यानिकमात्मनः परमात्मत्वेन ध्याने सति भवति । यदात्मानं परमात्मेति जानाति तदा सर्वसत्वान्न विशिष्यते तस्य न कुत्रचिन्ममत्वं मानापमानादिकं वा भवति, तथाविधज्ञानाद्ब्रह्मात्मत्वं च जायते ।

ध्यानिकविशेषाध्येयविशेषलाभे परमात्मध्यानार्थमाह – न ह्यनध्यात्म विदिति ।। यस्मादात्मानं जीवमधिकृत्य यदुक्तं तस्य परमात्मत्वं तद्यो न जानाति न ध्यायति स प्रकृतध्यानक्रियाफलं ममत्वत्यागमाना पमानादिहानिं मोक्षं च न प्राप्नोति ।।८२।।

**अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च ।**
**आध्यात्मिकं च सततं वेदान्ताभिहितं च यत् ॥८३॥**

अधियज्ञमिति ॥ पूर्वं ब्रह्मध्यानस्वरूपमुपासनमुक्तं । इदानीं तदङ्गतया वेदजपं विधत्ते । तथाच श्रुतिः – 'तमेतं वेदानुवचनेन ब्राह्मणा विविषिन्ति' इति विद्याङ्गतया वेदजपमुपदिशति – अधियज्ञमिति ॥ यज्ञमधिकृत्य प्रवृत्तं ब्रह्म वेदं तथा देवतामधिकृत्य प्रवृत्तं तथा जीवमधिकृत्य तथा वेदान्तेषूक्तं 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिब्रह्मप्रतिपादकं सर्वदा जपेत् ॥८३॥

**इदं शरणमज्ञानामिदमेव विजानताम् ।**
**इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम् ॥८४॥**

इदमिति ॥ इदं वेदाख्यं ब्रह्म तथर्थानभिज्ञानामपि शरणं गतिः, पाठमात्रेणापि पापक्षयहेतुत्वात् । सुतरां तज्ज्ञानतां तदर्थाभिज्ञानां स्वर्गमपवर्गं चेच्छतामिदमेव शरणं, तदुपायोपदेशकत्वेन तत्प्राप्तिहेतुत्वात् ॥८४॥

**अनेन क्रमयोगेन परिव्रजति यो द्विजः ।**
**स विधूयेह पाप्मानं परं ब्रह्माधिगच्छति ॥८५॥**

अनेनेति ॥ अनेन यथाक्रमोक्तानुष्ठानेन यः प्रव्रज्याश्रममाश्रयति स इह लोके पापं विसृज्य परं ब्रह्म प्राप्नोति ब्रह्मसाक्षात्कारेणोपाधिशरीर नाशाद्ब्रह्मण्यैक्यं गच्छति ॥८५॥

**॥ इति यतिधर्मप्रकरणम् समाप्तम् ॥**